दृष्ट्वा च ता पर्ष चतस्र तायिनश्चन्द्रार्कदीपस्य इमं प्रभावम् ।
हर्षस्थिताः सर्वि भवित्व तत्क्षणमन्योन्य पृच्छन्ति कथं नु एतत् ॥७३॥
अचिराच्च सो नरमरुयक्षपूजितः समाधितो व्युत्थितलोकनायकः ।
वरप्रभं पुत्र तदाध्यभाषत यो बोधिसत्त्वो विदु धर्मभाणकः ॥७४॥
लोकस्य चक्षुश्च गतिश्च त्वं विदुर्वैश्वासिको धर्मधरश्च मह्यम् ।
त्वं ह्यत्र साक्षी मम धर्मकोशे यथाहु भाषिष्यि हिताय प्राणिनाम् ॥७५॥
संस्थापयित्वा बहुबोधिसत्त्वान् हर्षित्व संवर्णिय संस्तवित्वा ।
प्रभाषते तज्जिन अग्रधर्मान् परिपूर्ण सो अन्तरकल्पषष्टिम् ॥७६॥
यं चैव सो भाषति लोकनाथो एकासनस्थः प्रवराग्रधर्मम् ।
तं सर्वमाधारयि सो जिनात्मजो वरप्रभो यो अभु धर्मभाणकः ॥७७॥
सो चो जिनो [1]भाषिय अग्रधर्मं प्रहर्षयित्वा जनतामनेकाम् ।
तस्मिंश्च दिवसे वदते स नायकः पुरतो हि लोकस्य सदेवकस्य ॥७८॥
प्रकाशिता मे इय धर्मनेत्री आचक्षितो धर्मस्वभाव यादृशः ।
निर्वाणकालो मम अद्य भिक्षवो रात्रीय यामस्मि ह मध्यमस्मिन् ॥७९॥
भवथाप्रमत्ता अधिमुक्तिसारा अभियुज्यथा मह्य इमस्मि शासने ।
सुदुर्लभा भोन्ति जिना महर्षयः कल्पान कोटीनयुतान अत्ययात् ॥८०॥
सन्तापजाता बहुबुद्धपुत्रा दुःखेन चोग्रेण समर्पिताभवन् ।
श्रुत्वा न घोषं द्विपदोत्तमस्य निर्वाणशब्दं अतिक्षिप्रमेतत् ॥८१॥
आश्वासयित्वा च नरेन्द्रराजा ताः[2] प्राणकोट्यो बहवो अचिन्तियाः[3] ।
मा भायथा[4] भिक्षव निर्वृते मयि भविष्यथ[5] बुद्ध ममोत्तरेण[6] ॥८२॥
श्रीगर्भ एषो विदु बोधिसत्त्वो गतिं गतो ज्ञानि अनास्रवस्मिन् ।
स्पृशिष्यते उत्तममग्रबोधिं विमलाग्रनेत्रो ति जिनो भविष्यति ॥८३॥
तामेव रात्रिं तद यामि मध्यमे परिनिर्वृतो हेतुक्षये वा दीपः ।
शरीर वैस्तारिकु तस्य चाभूत् स्तूपान कोटीनयुता अनन्तका ॥८४॥

---

1 B. सा चो जनो
2 B. या
3 B. अचिन्तियामः
4 B. भायथ
5 J. ०ष्यते
6 B. ममान्तरेण

भिक्षुश्च तत्रा तथ[1] भिक्षुणीयो ये प्रस्थिता उत्तममग्रबोधिम् ।
अनल्पकास्ते यथ गङ्गवालिका अभियुक्त तस्यो[2] सुगतस्य शासने ॥८५॥
यश्चापि भिक्षुस्तद धर्मभाणको वरप्रभो येन स धर्म धारितः ।
अशीति सो अन्तरकल्पपूर्णां तहि शासने भाषति अग्रधर्मान् ॥८६॥
अष्टाशतं तस्य अभूषि शिष्याः परिपाचिता ये तद तेन सर्वे ।
दृष्टा च तेभिर्बहुबुद्धकोट्यः सत्कारु तेषां च कृतो महर्षिणाम् ॥८७॥
चर्यां चरित्वा तद आनुलोमिकीं बुद्धा अभूवन् बहुलोकधातुषु ।
परस्परं ते च अनन्तरेण अन्योन्य व्याकर्षु तदाग्रबोधये ॥८८॥
तेषां च बुद्धान परस्परेण दीपङ्करः पश्चिमको अभूषि ।
देवातिदेवो ऋषिसङ्घपूजितो विनीतवान् प्राणिसहस्रकोट्यः ॥८९॥
यश्चासि तस्यो[3] सुगतात्मजस्य वरप्रभस्यो[3] तद धर्म भाषतः ।
शिष्यः कुसीदश्च स लोलुपात्मा लाभं च ज्ञातं च गवेषमाणः[4] ॥९०॥
यशोऽर्थिकश्चाप्यतिमात्र आसीत् कुलाकुलं च प्रतिपन्नमासीत्[5] ।
उद्देश स्वाध्यायु तथास्य सर्वो न तिष्ठते भाषितु तस्मि काले ॥९१॥
नामं च तस्यो[3] इममेवमासीद् यशकामनाम्ना दिशतासु विश्रुतः ।
स चापि तेनाकुशलेन कर्मणा कल्माषभूतेनभिसंस्कृतेन ॥९२॥
आरागयी बुद्धसहस्रकोट्यः पूजां च तेषां विपुलामकार्षीत् ।
चीर्णा च चर्या वर आनुलोमिकी दृष्टश्च बुद्धो अयु शाक्यसिंहः ॥९३॥
अयं च सो पश्चिमको भविष्यति अनुत्तरां लप्स्यति चाग्रबोधिम् ।
मैत्रेयगोत्रो भगवान् भविष्यति विनेष्यति प्राणसहस्रकोट्यः ॥९४॥

---

1 B. भिक्षू बहू तथपि च 2 B. तस्य 3 B. ०स्य

4 Tib, 12ª, l. 4: སློབ་མ་སྙེདན་དང་ལྡན་ཞིང་ལེ་ལོ་ཅན། །
ཞེས་ཀྱི་ཁེ་དང་རྙེད་པ་ཚོལ་བ་དང་། །

5 J. प्रतिपन्न श्रा० Tib. 12ª, l. 4-5:
ཤིན་ཏུ་གྲགས་པ་འདོད་པའི་ཤས་ཆེ་ཞིང་། །
གྲོང་ནས་གྲོང་དུ་རྒྱུ་བར་གྱུར་པ་སྟེ། །

कौसीद्यप्राप्तस्तद यो बभूव परिनिर्वृतस्य सुगतस्य शासने ।
त्वमेव सो तादृशको बभूव अहं च आसीत्तद धर्मभाणकः ॥९५॥
इमेन हं कारणहेतुनाद्य दृष्ट्वा निमित्तं इदमेवरूपम् ।
ज्ञानस्य तस्य प्रथितं निमित्तं प्रथमं मया तत्र वदामि दृष्टम् ॥९६॥
ध्रुवं जिनेन्द्रोऽपि समन्तचक्षुः शाक्याधिराजः परमार्थदर्शी ।
तमेव यं इच्छति भाषणाय पर्यायमग्रं तद् यो मया श्रुतः[1] ॥९७॥
तदेव परिपूर्णनिमित्तमद्य उपायकौशल्य विनायकानाम् ।
संस्थापनं कुर्वति शाक्यसिंहो भाषिष्यते धर्मस्वभावमुद्राम् ॥९८॥
प्रयता सुचित्ता भवथा कृताञ्जली भाषिष्यते लोकहितानुकम्पी ।
वर्षिष्यते धर्ममनन्तवर्षं तर्पिष्यते ये स्थित बोधिहेतोः ॥९९॥
येषां च सन्देहगतीह काचिद् ये संशया या विचिकित्स काचित् ।
व्यपनेष्यते ता विदुरात्मजानां ये बोधिसत्त्वा इह बोधिप्रस्थिताः[2] ॥१००॥

इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याये निदानपरिवर्तो नाम
प्रथमः ॥१॥

1 B. यं मया श्रुतम्    2 J. प्रस्थित

# उपायकौशल्यपरिवर्तः

अथ[1] खलु भगवान् स्मृतिमान् संप्रजानं[2]स्ततः समाधेर्व्युत्थितो व्युत्थायायुष्मन्तं शारिपुत्रमामन्त्रयते स्म। गम्भीरं शारिपुत्र दुर्दृशं दुरनुबोधं बुद्धज्ञानं तथागतैरर्हद्भिः सम्यक्संबुद्धैः प्रतिबुद्धं दुर्विज्ञेयं सर्वश्रावकप्रत्येकबुद्धैः। तत् कस्य हेतोः। बहुबुद्धकोटीनयुतशतसहस्रपर्युपासिताविनो हि शारिपुत्र तथागता अर्हन्तः सम्यक्संबुद्धा बहुबुद्धकोटीनयुतशतसहस्र[3]चीर्णचरिताविनोऽनुत्तरायां सम्यक्संबोधौ दूरानुगताः कृतवीर्या आश्चर्याद्भुतधर्मसमन्वागता दुर्विज्ञेयधर्मसमन्वागता दुर्विज्ञेयधर्मानुज्ञाताविनः।

दुर्विज्ञेयं शारिपुत्र संधाभाष्यं[4] तथागतानामर्हतां सम्यक्संबुद्धानाम्। तत् कस्य हेतोः। स्वप्रत्ययान् धर्मान् प्रकाशयन्ति विविधोपायकौशल्यज्ञानदर्शनहेतुकारणनिर्देशनारम्बरणनिरुक्तिप्रज्ञप्तिभिस्तैस्तैरुपायकौशल्यैस्तस्मिंस्तस्मिंल्लग्नान् सत्त्वान् प्रमोचयितुम्। महोपायकौशल्यज्ञानदशनपरमपारमिताप्राप्ताः शारिपुत्र तथागता अर्हन्तः सम्यक्संबुद्धाः। असङ्गाप्रतिहतज्ञानदर्शनबलवैशारद्यावेणिकेन्द्रियबलबोध्यङ्गध्यानविमोक्षसमाधिसमापत्त्यद्भुतधर्मसमन्वागता विविधधर्मसंप्रकाशकाः। महाश्चर्याद्भुतप्राप्ताः शारिपुत्र तथागता अर्हन्तः सम्यक्संबुद्धाः। अलं शारिपुत्र एतावदेव भाषितुं[4] भवतु परमाश्चर्यप्राप्ताः शारिपुत्र तथागता अर्हन्तः सम्यक्संबुद्धाः। तथागत एव शारिपुत्र तथागतस्य धर्मान्[5] देशयेद् यान् धर्मांस्तथागतो जानाति। सर्वधर्मानपि शारिपुत्र तथागत एव देशयति। सर्वधर्मानपि तथागत एव जानाति। ये च ते धर्मा यथा च ते धर्मा यादृशाश्च ते धर्मा यल्लक्षणाश्च ते धर्मा यत्स्वभावाश्च ते धर्माः। ये च यथा च यादृशाश्च यल्लक्षणाश्च यत्स्वभावाश्च ते धर्मा इति। तेषु धर्मेषु तथागत एव प्रत्यक्षोऽपरोक्षः।

अथ खलु भगवानेतमेवार्थं भूयस्या मात्रया सन्दर्शयमानस्तस्यां वेलायामिमा गाथा अभाषत।

---

1 Tib. folio 12b. l. 4 2 B. संप्रज्ञानस्त॰ 3 B. ॰सकल्प॰

4 Tib. 13a, l. 1: སྨྲས་པོར་ དགོངས་དེ་ བཤད་པ །

5 B. भाषितं 6 B. धर्मं

अप्रमेया महावीरा लोके समरुमानुषे ।
न शक्यं सर्वशो ज्ञातुं सर्वसत्त्वैर्विनायकाः ॥१॥
बला विमोक्षा[1] ये तेषां वैशारद्याश्च यादृशाः ।
यादृशा बुद्धधर्माश्च न शक्यं ज्ञातु केनचित् ॥२॥
पूर्वे निषेविता चर्या बुद्धकोटीन अन्तिके ।
गम्भीरा चैव सूक्ष्मा च दुर्विज्ञेया सुदुर्दृशा ॥३॥
तस्यां चीर्णाय चर्यायां कल्पकोट्यो अचिन्तिया ।
फलं मे बोधिमण्डस्मिन् दृष्टं यादृशकं हि तत् ॥४॥
अहं च तत् प्रजानामि ये चान्ये लोकनायकाः ।
यथा यद् यादृशं चापि लक्षणं चास्य यादृशम् ॥५॥
न तद् दर्शयितुं शक्यं व्याहारोऽस्य न विद्यते ।
नाप्यसौ तादृशः कश्चित् सत्त्वो लोकेऽस्मि विद्यते ॥६॥
यस्य तं देशयेद्धर्मं[2] देशितं चापि जानियात् ।
अन्यत्र बोधिसत्त्वेभ्यो अधिमुक्तीय ये स्थिताः ॥७॥
ये चापि ते लोकविदुष्य श्रावकाः
कृताधिकाराः सुगतानुवर्णिताः ।
क्षीणास्रवा अन्तिमदेहधारिणो
न तेष विषयोऽस्ति जिनान ज्ञाने ॥८॥
स चैव[3] सर्वा इय लोकधातु
पूर्णा भवेच्छारिसुतोपमानाम् ।

---

M. 1 [Śāri]putra sarvb......
M. 2 [Arhan]tā samyaksam......
M. 3 [dha]rmam deśa
M. 4 [Punastṛt[īyasya]
M. 5 [Ka]lpa-saṃkṣobha
M. 6 Ti
M. 7 Tatra Śār[iputra]
M. 8 [Śrāva]kā vedayi[tavyā]

---

1 B. विमोक्षाश्च 2 B. दर्शयेद्धर्मं 3 J. सचेव

एकीभवित्वान[1] विचिन्तयेयुः
　　सुगतस्य ज्ञानं न हि शक्य जानितुम् ॥९॥
सचे ह त्वंसादृशकेहि पण्डितैः
　　पूर्णा भवेयुर्दश पिद्दिशायो ।
ये चापि मह्यं इमि श्रावकान्ये
　　तेषां पि पूर्णा भवि एवमेव ॥१०॥
एकीभवित्वान च तेऽद्य सर्वे
　　विचिन्तयेयुः सुगतस्य ज्ञानम् ।
न शक्त सर्वे सहिता पि ज्ञातुं
　　यथाप्रमेयं[2] मम बुद्धज्ञानम् ॥११॥
प्रत्येकबुद्धान अनास्रवाणां
　　तीक्ष्णेन्द्रियाणान्तिमदेहधारिणाम् ।
दिशो दशः[3] सर्व भवेयु पूर्णा
　　यथा नड़ानां वनवेणुनां वा ॥१२॥
एकीभवित्वान विचिन्तयेयु-
　　र्ममाग्रधर्माण प्रदेशमात्रम् ।
कल्पान कोटीनयुताननन्ता-
　　न्न तस्य भूतं परिजानि अर्थम् ॥१३॥
नवयानसंप्रस्थित बोधिसत्त्वाः
　　कृताधिकारा बहुबुद्धकोटिषु ।
सुविनिश्चितार्था बहुधर्मभाणका-
　　स्तेषां पि पूर्णा दशिमा दिशो भवेत् ॥१४।
नड़ान वेणून व[4] नित्यकाल-
　　मच्छिद्रपूर्णो भवि सर्वलोकः ।
एकीभवित्वान विचिन्तयेयु-
　　र्यो धर्म साक्षात् सुगतेन दृष्टः ॥१५॥

1 B. ०भवित्वानु०　　2 B. यच्चाप्र०　　3 B. दश

4 B. च, Tib. 14a, l. 3: སྨྱིག་དང་འདམ་བུ །

अनुचिन्तयित्वा बहुकल्पकोट्यो
गङ्गा यथा वालिक अप्रमेयाः ।
अनन्यचित्ताः सुखमाय प्रज्ञया
तेषां पि चास्मिन् विषयो न विद्यते ॥१६॥
अविवर्तिका ये भवि बोधिसत्त्वा
अनल्पका यथरिव गङ्गवालिकाः ।
अनन्यचित्ताश्च विचिन्तयेयु-
स्तेषां पि चास्मिन् विषयो न विद्यते ॥१७॥
गम्भीरधर्मा सुखुमा[1] पि बुद्धा
अतर्किकाः सर्वि अनास्रवाश्च ।
अहं च जानामिह यादृशा हि ते
ते[2] वा जिना लोकि दशद्दिशासु ॥१८॥
यं शारिपुत्रो[3] सुगतः प्रभाषते
अधिमुक्तिसम्पन्न भवाहि तत्र ।
अनन्यथावादि जिनो महर्षी
चिरेण पी[4] भाषति उत्तमार्थम्[5] ॥१९॥
आमन्त्रयामी[6] इमि सर्वश्रावकान्
प्रत्येकबोधाय च येऽभिप्रस्थिताः ।
संस्थापिता ये मय[7] निर्वृतीय
संमोक्षिता दुःखपरम्परातः ॥२०॥
उपायकौशल्य ममेतदग्रं
भाषामि धर्मं बहु येन लोके ।
तहिं तहिं लग्न प्रमोचयामि
त्रीणी च यानान्युपदर्शयामि ॥२१॥

अथ खलु ये[8] तत्र पर्षत्सन्निपाते महाश्रावका आज्ञातकौण्डिन्यप्रमुखा अर्हन्तः क्षीणास्रवा द्वादशवशीभूतशतानि ये चान्ये श्रावकयानिका भिक्षुभिक्षु-

1 B. सुखमा 2 B. ये 3 B. ०पुत्र
4 B. पि 5 B. श्रौत्तमार्थम् 6 B. ०यामि
7 B. मम 8 B. ते

ण्युपासकोपासिका ये च प्रत्येकबुद्धयानसंप्रस्थितास्तेषां सर्वेषामेतदभवत्। को नु हेतुः किं कारणं यद् भगवानधिमात्रमुपायकौशल्यं तथागतानां संवर्णयति। गम्भीरश्चायं मया धर्मोऽभिसंबुद्ध इति संवर्णयति। दुर्विज्ञेयश्च सर्वश्रावकप्रत्येकबुद्धैरिति संवर्णयति। यथा तावद् भगवता एकैव विमुक्तिराख्याता वयमपि बुद्धधर्माणां लाभिनो निर्वाणप्राप्ताः। अस्य च वयं भगवतो भाषितस्यार्थं न जानीमः।

अथ खल्वायुष्मान् शारिपुत्रस्तासां चतसृणां पर्षदां विचिकित्साकथंकथां विदित्वा चेतसैव चेतःपरिवितर्कमाज्ञायात्मना च धर्मसंशयप्राप्तस्तस्यां वेलायां भगवन्तमेतदवोचत्। को भगवन् हेतुः कः प्रत्ययो यद् भगवानधिमात्रं पुनः पुनस्तथागतानामुपायकौशल्यज्ञानदर्शनधर्मदेशनां संवर्णयति। गम्भीरश्च मे धर्मोऽभिसंबुद्ध इति। दुर्विज्ञेयं च संधाभाष्यमिति पुनः पुनः संवर्णयति। न च मे भगवतोऽन्तिकादेवंरूपो धर्मपर्यायः श्रुतपूर्वः। इमाश्च भगवंश्चतस्रः पर्षदो विचिकित्साकथंकथाप्राप्ताः। तत् साधु भगवान्निर्दिशतु यत् सन्धाय तथागतो गम्भीरस्य तथागतधर्मस्य पुनः पुनः संवर्णनां करोति।

अथ खल्वायुष्मान् शारिपुत्रस्तस्यां वेलायामिमा गाथा अभाषत।

चिरस्याद्य नरादित्य ईदृशीं कुरुते कथाम्।
बला विमोक्षा ध्यानाश्च अप्रमेया मि स्पर्शिताः ॥२२॥
बोधिमण्डं च कीर्तेसि पृच्छकस्ते न विद्यते।
संधाभाष्यं च कीर्तेसि न च त्वां कश्चि पृच्छति ॥२३॥
अपृच्छितो व्याहरसि चर्यां वर्णेसि चात्मनः।
ज्ञानाधिगम कीर्तेसि गम्भीरं च प्रभाषसे ॥२४॥
अद्येमे संशयप्राप्ता वशीभूता अनास्रवाः।
निर्वाणं प्रस्थिता ये च किमेतद् भाषते जिनः ॥२५॥
प्रत्येकबोधि प्रार्थेन्ता[1] भिक्षुण्यो भिक्षवस्तथा।
देवा नागाश्च यक्षाश्च गन्धर्वाश्च महोरगाः ॥२६॥
समालपन्तो अन्योन्यं प्रेक्षन्ते द्विपदोत्तमम्।
कथंकथी विचिन्तेन्ता व्याकुरुष्व महामुने ॥२७॥

---

1 B. प्रार्थेन्ति

यावन्तः श्रावकाः सन्ति सुगतस्येह सर्वशः ।
अहमत्र पारमीप्राप्तो निर्दिष्टः परमर्षिणा ॥२८॥
ममापि संशयो ह्यत्र स्वके स्थाने नरोत्तम ।
किं निष्ठा मम निर्वाणे अथ चर्या मि दर्शिता ॥२९॥

प्रमुञ्च घोषं वरदुन्दुभिस्वरा उदाहरस्वा[1] यथ एष धर्मः ।
इमे स्थिता पुत्र जिनस्य औरसा व्यवलोकयन्तश्च कृताञ्जली जिनम् ॥३०॥
देवाश्च नागाश्च सयक्षराक्षसाः कोटीसहस्रा यथ गङ्गवालिकाः ।
ये चापि प्रार्थेन्ति समग्रबोधिं सहस्रशीतिः परिपूर्ण ये स्थिताः ।३१॥
राजान ये महिपति चक्रवर्तिनो ये आगताः क्षेत्रसहस्रकोटिभिः ।
कृताञ्जली सर्वि सगौरवाः स्थिताः कथं नु चर्यां परिपूरयेम ॥३२॥

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत् । अलं शारिपुत्र । किमनेनार्थेन भाषितेन । तत् कस्य हेतोः । उत्त्रसिष्यति शारिपुत्रायं सदेवको लोकोऽस्मिन्नर्थे व्याक्रियमाणे ।

द्वैतीयकमप्यायुष्मान् शारिपुत्रो भगवन्तमध्येषते[2] स्म । भाषतां भगवान् भाषतां सुगत एतमेवार्थम् । तत् कस्य हेतोः । सन्ति भगवंस्तस्यां पर्षदि बहूनि प्राणिशतानि बहूनि प्राणिसहस्राणि बहूनि प्राणिशतसहस्राणि बहूनि प्राणिकोटीनयुतशतसहस्राणि पूर्वबुद्धदर्शावीनि प्रज्ञावन्ति यानि भगवतो भाषितं श्रद्धास्यन्ति प्रतीयिष्यन्ति उद्ग्रहीष्यन्ति ।

अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमनया गाथयाध्यभाषत[3] ।

विस्पष्टु भाषस्व जिनान[4] उत्तमा
सन्तीह पर्षाय सहस्र प्राणिनाम् ।
श्राद्धाः[5] प्रसन्नाः सुगते सगौरवा
ज्ञास्यन्ति ये धर्मसुदाहृतं ते ॥३३॥

अथ खलु भगवान् द्वैतीयकमप्यायुष्मन्तं शारिपुत्रमेतदवोचत् । अलं शारिपुत्रानेनार्थेन प्रकाशितेन । उत्त्रसिष्यति शारिपुत्रायं सदेवको लोकोऽस्मिन्नर्थे व्याक्रियमाणे । अभिमानप्राप्ताश्च भिक्षवो महाप्रपातं प्रपतिष्यन्ति ।

---

1 B. ०स्व　　2 B. ०ध्येष्यते　　3 J. ०प्यभा०
4 J. जनान　　5 J. श्रद्धाः

अथ खलु भगवांस्तस्यां वेलायामिमां गाथामभाषत ।

अलं हि धर्मेणिह भाषितेन
सूक्ष्मं इदं ज्ञानमतर्किकं च ।
अभिमानप्राप्ता बहु सन्ति बाला
निर्दिष्टधर्मस्मि क्षिपे अजानकाः ॥३४॥

त्रैतीयकमप्यायुष्मान् शारिपुत्रो भगवन्तमध्येषते स्म। भाषतां भगवान् भाषतां सुगत एतमेवार्थम्। मादृशानां भगवन्निह पर्षदि बहूनि प्राणिशतानि संविद्यन्ते अन्यानि च भगवन् बहूनि प्राणिशतानि बहूनि प्राणिसहस्राणि बहूनि प्राणिशतसहस्राणि बहूनि प्राणिकोटीनयुतशतसहस्राणि यानि भगवता पूर्वभवेषु परिपाचितानि तानि भगवतो भाषितं श्रद्धास्यन्ति प्रतीयिष्यन्ति उद्ग्रहीष्यन्ति। तेषां तद् भविष्यति दीर्घरात्रमर्थाय हिताय सुखायेति ।

अथ खल्वायुष्मान् शारिपुत्रस्तस्यां वेलायामिमा गाथा अभाषत।

भाषस्व धर्मं द्विपदानमुत्तमा अहं त्वमध्येषमि ज्येष्ठपुत्रः ।
सन्तीह प्राणीन सहस्रकोट्यो ये श्रद्दधास्यन्ति ते धर्म भाषितम् ॥३५॥
ये च त्वया पूर्वभवेषु नित्यं परिपाचिताः सत्त्व सुदीर्घरात्रम् ।
कृताञ्जली ते पि स्थितात्र सर्वे ये श्रद्दधास्यन्ति तवैत धर्मम् ॥३६॥
अस्मादृशा द्वादशिमे शताश्च ये चापि ते प्रस्थित अग्रबोधये ।
तान् पश्यमानः सुगतः प्रभाषतां तेषां च हर्षं परमं जनेतु ॥३७॥

अथ खलु भगवांस्त्रैतीयकमप्यायुष्मतः शारिपुत्रस्याध्येषणां विदित्वायुष्मन्तं शारिपुत्रमेतदवोचत्। यदिदानीं त्वं शारिपुत्र यावत्त्रैतीयकमपि तथागत-मध्येषसे। एवमध्येषमाणं त्वां शारिपुत्र किं वक्ष्यामि। तेन हि शारिपुत्र शृणु साधु च सुष्ठु च मनसिकुरु। भाषिष्येऽहं ते ।

समनन्तरभाषिता चेयं भगवता वाक्। अथ खलु ततः पर्षद आभिमानिकानां भिक्षूणां भिक्षुणीनामुपासकानामुपासिकानां पञ्चमात्राणि सहस्राण्युत्थायासनेभ्यो भगवतः पादौ शिरसाभिवन्दित्वा ततः पर्षदोऽपक्रामन्ति स्म। यथापीदमभिमानाकुशलमूलेनाप्राप्तेप्राप्तसंज्ञिनोऽनधिगतेऽधिगतसंज्ञिनः। त आत्मानं सव्रणं ज्ञात्वा ततः पर्षदोऽपक्रान्ताः। भगवांश्च तूष्णीम्भावेनाधि-वासयति स्म ।

अथ खलु भगवानायुष्मन्तं शारिपुत्रमामन्त्रयते स्म। निष्पलावा मे शारिपुत्र पर्षदपगतफल्गुः श्रद्धासारे प्रतिष्ठिता। साधु शारिपुत्रैतेषामाभिमानिका-

नामतोऽपक्रमणम्। तेन हि शारिपुत्र भाषिष्य एतमर्थम्। साधु भगवन्नित्यायुष्मान् शारिपुत्रो भगवतः प्रत्यश्रौषीत्।

भगवानेतदवोचत्। कदाचित् कर्हिचिच्छारिपुत्र तथागत एवंरूपां धर्मदेशनां कथयति। तद् यथापि नाम शारिपुत्रोदुम्बरपुष्पं कदाचित् कर्हिचित् संदृश्यते एवमेव शारिपुत्र तथागतोऽपि कदाचित् कर्हिचित् एवंरूपां धर्मदेशनां कथयति। श्रद्दधत मे शारिपुत्र भूतवाद्यहमस्मि तथावाद्यहमस्म्यनन्यथावाद्यहमस्मि। दुर्बोध्यं शारिपुत्र तथागतस्य संधाभाष्यम्। तत् कस्य हेतोः। नानानिरुक्तिनिर्देशाभिलापनिर्देशनैर्मया शारिपुत्र विविधैरुपायकौशल्यशतसहस्रैर्धर्मः संप्रकाशितः। अतर्कोऽतर्कावचरस्तथागतविज्ञेयः शारिपुत्र सद्धर्मः। तत् कस्य हेतोः। एककृत्येन शारिपुत्रैककरणीयेन तथागतोऽर्हन् सम्यक् संबुद्धो लोक उत्पद्यते महाकृत्येन महाकरणीयेन। कतमच्च शारिपुत्र तथागतस्यैककृत्यमेककरणीयं महाकृत्यं महाकरणीयं येन कृत्येन तथागतोऽर्हन् सम्यक्संबुद्धो लोक उत्पद्यते। यदिदं तथागतज्ञानदर्शनसमादापनहेतुनिमित्तं सत्त्वानां तथागतोऽर्हन् सम्यक्संबुद्धो लोक उत्पद्यते। तथागतज्ञानदर्शनसंदर्शनहेतुनिमित्तं सत्त्वानां तथागतोऽर्हन् सम्यक्संबुद्धो लोक उत्पद्यते। तथागतज्ञानदर्शनावतारणहेतुनिमित्तं सत्त्वानां तथागतोऽर्हन् सम्यक्संबुद्धो लोक उत्पद्यते। तथागतज्ञानप्रतिबोधनहेतुनिमित्तं सत्त्वानां तथागतोऽर्हन् सम्यक्संबुद्धो लोक उत्पद्यते। तथागतज्ञानदर्शनमार्गावतारणहेतुनिमित्तं सत्त्वानां तथागतोऽर्हन् सम्यक् संबुद्धो लोक उत्पद्यते। इदं तच्छारिपुत्र तथागतस्यैककृत्यमेककरणीयं महाकृत्यं महाकरणीयमेकप्रयोजनं लोके प्रादुर्भावाय। इति हि शारिपुत्र यत्तथागतस्यैककृत्यमेककरणीयं महाकृत्यं महाकरणीयं तत्तथागतः करोति। तत् कस्य हेतोः। तथागतज्ञानदर्शनसमादापक एवाहं शारिपुत्र तथागतज्ञानदर्शनसन्दर्शक एवाहं शारिपुत्र तथागतज्ञानदर्शनावतारक एवाहं शारिपुत्र तथागतज्ञानदर्शनप्रतिबोधक एवाहं शारिपुत्र तथागतज्ञानदर्शनमार्गावतारक एवाहं शारिपुत्र। एकमेवाहं शारिपुत्र यानमारभ्य सत्त्वानां धर्मं देशयामि यदिदं बुद्धयानम्। न किञ्चिच्छारिपुत्र द्वितीयं वा तृतीयं वा यानं संविद्यते। सर्वत्रैषा शारिपुत्र धर्मता दशदिग्लोके। तत् कस्य हेतोः। येऽपि ते शारिपुत्र अतीतेऽध्वन्यभूवन् दशसु दिक्ष्वप्रमेयेष्वसंख्येयेषु लोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धा बहुजन-

हिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च। ये नानाभिनिर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौशल्यैर्नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा धर्मं देशितवन्तः। तेऽपि सर्वे शारिपुत्र बुद्धा भगवन्त एकमेव यानमारभ्य सत्त्वानां धर्मं देशितवन्तो यदिदं बुद्धयानं सर्वज्ञतापर्यवसानं यदिदं तथागतज्ञानदर्शनसमादापनमेव सत्त्वानां तथागतज्ञानदर्शनसंदर्शनमेव तथागतज्ञानदर्शनावतारणमेव तथागतज्ञानदर्शनप्रतिबोधनमेव तथागतज्ञानदर्शनमार्गावतारणमेव सत्त्वानां धर्मं देशितवन्तः। यैरपि शारिपुत्र सत्त्वै(*)स्तेषामतीतानां तथागतानामर्हतां सम्यक्संबुद्धानामन्तिकात् सद्धर्मः श्रुतस्तेऽपि सर्वेऽनुत्तरायाः सम्यक्संबोधेर्लाभिनोऽभूवन्।

येऽपि ते शारिपुत्रानागतेऽध्वनि भविष्यन्ति दशसु दिक्ष्वप्रमेयेष्वसंख्येयेषु लोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धा(*) बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च। ये च नानाभिर्निहारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौशल्यैर्नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा धर्मं देशयिष्यन्ति। तेऽपि सर्वे शारिपुत्र बुद्धा भगवन्त एकमेव यानमारभ्य सत्त्वानां धर्मं देशयिष्यन्ति(*) यदिदं बुद्धयानं सर्वज्ञतापर्यवसानं यदिदं तथागतज्ञानदर्शनसमादापनमेव सत्त्वानां तथागतज्ञानदर्शनसन्दर्शनमेव तथागतज्ञानदर्शनावतारणमेव तथागतज्ञानदर्शनप्रतिबोधनमेव तथागतज्ञानदर्शनमार्गावतारणमेव सत्त्वानां धर्मं देशयिष्यन्ति। येऽपि ते शारिपुत्र सत्त्वास्तेषामनागतानां तथागतानामर्हतां सम्यक्संबुद्धानामन्तिकात् तं धर्मं श्रोष्यन्ति तेऽपि सर्वेऽनुत्तरायाः सम्यक्संबोधेर्लाभिनो भविष्यन्ति।

येऽपि ते शारिपुत्रैतर्हि प्रत्युत्पन्नेऽध्वनि दशसु दिक्ष्वप्रमेयेष्वसंख्येयेषु लोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धास्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्मं च देशयन्ति बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च। ये नानाभिनिर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौशल्यैर्नानाधिमुक्तानां सत्त्वानां

---

* M. [Śāri]putra sarvb...  * M. [arhan]tā samyaksaṃ...
* M. [dha]rmaṃ deśa...

नानाधात्वाशयानामाशयं विदित्वा धर्मं देशयन्ति। तेऽपि सर्वे शारिपुत्र बुद्धा भगवन्त एकमेव यानमारभ्य सत्त्वानां धर्मं देशयन्ति यदिदं बुद्धयानं सर्वज्ञतापर्यवसानं यदिदं तथागतज्ञानदर्शनसमादापनमेव सत्त्वानां तथागत-ज्ञानदर्शनसन्दर्शनमेव तथागतज्ञानदर्शनावतारणमेव तथागतज्ञानदर्शनप्रति-बोधनमेव तथागतज्ञानदर्शनमार्गावतारणमेव सत्त्वानां धर्मं देशयन्ति। येऽपि ते शारिपुत्र[1] सत्त्वास्तेषां प्रत्युत्पन्नानां तथागतानामर्हतां सम्यक्संबुद्धा-नामन्तिकात् तं धर्मं शृण्वन्ति तेऽपि सर्वेऽनुत्तरायाः सम्यक्संबोधेर्लाभिनो भविष्यन्ति।

अहमपि शारिपुत्रैतर्हि तथागतोऽर्हन् सम्यक्संबुद्धो बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानाञ्च मनुष्याणाञ्च नानाभिनिर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बण-निरुक्त्युपायकौशल्यैर्नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा धर्मं देशयामि। अहमपि शारिपुत्रैकमेव यानमारभ्य सत्त्वानां धर्मं देशयामि यदिदं बुद्धयानं सर्वज्ञतापर्यवसानं यदिदं तथागतज्ञानदर्शनसमा-दापनमेव सत्त्वानां तथागतज्ञानदर्शनसन्दर्शनमेव तथागतज्ञानदर्शनावतारणमेव तथागतज्ञानदर्शनप्रतिबोधनमेव तथागतज्ञानदर्शनमार्गावतारणमेव सत्त्वानां धर्मं देशयामि। येऽपि ते शारिपुत्र सत्त्वा एतर्हि ममेमं धर्मं शृण्वन्ति तेऽपि सर्वेऽनुत्तरायाः सम्यक्संबोधेर्लाभिनो भविष्यन्ति। तदनेनापि शारिपुत्र पर्याये-णैवं वेदितव्यं यथा नास्ति द्वितीयस्य यानस्य क्वचिद्दशसु दिक्षु लोके प्रज्ञप्तिः कुतः पुनस्तृतीयस्य(*)।

अपि तु खलु पुनः शारिपुत्र यदा तथागता अर्हन्तः सम्यक्संबुद्धाः कल्पकषाये वोत्पद्यन्ते सत्त्वकषाये वा क्लेशकषाये वा दृष्टिकषाये वायुष्कषाये वोत्पद्यन्ते। एवंरूपेषु शारिपुत्र कल्पसंक्षोभ(*)कषायेषु बहुसत्त्वेषु लुब्धेष्वल्पकुशलमूलेषु तदा शारिपुत्र तथागता अर्हन्तः सम्यक्संबुद्धा उपायकौशल्येन तदेवैकं बुद्धयानं त्रियाननिर्देशेन निर्दिशन्ति(*)। तत्र शारिपुत्र(*) ये श्रावका अर्हन्तः प्रत्येकबुद्धा वेमां क्रियां तथागतस्य बुद्धयानसमादपनां

1 B. येऽपि शारि० * M...Punastṛt[īyasya].

* M...[ka]lpasaṃkṣobha... * M...ti.

* M. tatra śār[iputra]

न शृण्वन्ति नावतरन्ति नावबुध्यन्ति न ते शारिपुत्र तथागतस्य श्रावका वेदितव्या(*) नाप्यर्हन्तो नापि प्रत्येकबुद्धा वेदितव्याः।

अपि तु खलु पुनः शारिपुत्र यः कश्चिद् भिक्षुर्वा भिक्षुणी वार्हत्त्वं प्रतिजानीयादनुत्तरायां सम्यक्संबोधौ प्रणिधानमपरिगृह्योछिन्नोऽस्मि बुद्धयानादिति वदेदेतावन्मे समुच्छ्रयस्य पश्चिमकं परिनिर्वाणं वदेदाभिमानिकं तं शारिपुत्र प्रजानीयाः। तत् कस्य हेतोः। अस्थानमेतच्छारिपुत्रानवकाशो यद्भिक्षुरर्हन् क्षीणास्रवः संमुखीभूते तथागत इमं धर्मं श्रुत्वा न श्रद्दध्यात् स्थापयित्वा परिनिर्वृतस्य तथागतस्य। तत् कस्य हेतोः। न हि ते शारिपुत्र श्रावकास्तस्मिन् काले तस्मिन् समये परिनिर्वृते तथागत एतेषामेवंरूपाणां सूत्रान्तानां धारका वा देशका वा भविष्यन्ति[1]। अन्येषु पुनः शारिपुत्र तथागतेष्वर्हत्सु सम्यक्संबुद्धेषु निःसंशया भविष्यन्ति। इमेषु बुद्धधर्मेषु श्रद्दधाध्वं मे शारिपुत्र पत्तीयतावकल्पयत। न हि शारिपुत्र तथागतानां मृषावादः संविद्यते। एकमेवेदं शारिपुत्र यानं यदिदं बुद्धयानम्।

अथ खलु भगवानेतमेवार्थं भूयस्या मात्रया संदर्शयमानस्तस्यां वेलायामिमा गाथा अभाषत।

अथाभिमानप्राप्ता ये भिक्षुभिक्षुण्युपासकाः।
उपासिकाश्च अश्राद्धाः सहस्राः पञ्चनूनकाः ॥३८॥
अपश्यन्त[2] इमं दोषं छिद्रशिक्षासमन्विताः।
व्रणांश्च परिरक्षन्तः प्रक्रान्ता बालबुद्धयः ॥३९॥
पर्षत्कषायतान्[3] ज्ञात्वा लोकनाथोऽधिवासयि[4]।
तत्तेषां कुशलं नास्ति शृणुयुर्धर्म ये इमम् ॥४०॥
शुद्धा च निष्पलावा च सुस्थिता परिषन्मम।
फल्गु व्यपगता सर्वा सारा चेयं प्रतिष्ठिता ॥४१॥
शृणोहि मे शारिसुता यथैष संबुद्धधर्मः पुरुषोत्तमेहि।
यथा च बुद्धा कथयन्ति नायका उपायकौशल्यशतैरनेकैः ॥४२॥

---

* M...[śrāva]kā vedayi[tavyā]...

1 B. देशका भवि०

2 B. संपश्यन्त

3 B. पर्षत्कषट्टुतान्

4 B. ०थोऽसि ध्वंनि तान्

यथाशयं जानिय ते चरिं च नानाधिमुक्तानिह प्राणिकोटिनाम् ।
चित्राणि कर्माणि विदित्व तेषां पुराकृतं यत् कुशलं च तेहि ॥४३॥
नानानिरुक्तीहि च कारणेहि संप्रापयामी[1] इम तेष प्राणिनाम् ।
हेतूहि दृष्टान्तशतेहि चाहं तथा तथा तोषयि सर्वसत्त्वान् ॥४४॥
सूत्राणि भाषामि तथैव गाथा इतिवृत्तकं जातकमद्भुतञ्च ।
निदान औपम्यशतैश्च चित्रैर्गेयञ्च भाषामि तथोपदेशान् ॥४५॥
ये भोन्ति हीनाभिरता अविद्वसू अचीर्णचर्या बहुबुद्धकोटिषु ।
संसारलग्नाश्च सुदुःखिताश्च निर्वाण तेषामुपदर्शयामि ॥४६॥
उपायमेतं कुरुते स्वयम्भूर्बौद्धस्य ज्ञानस्य प्रबोधनार्थम् ।
न चापि तेषां प्रवदे कदाचिद् युष्मेपि बुद्धा इह लोकि[2] भेष्यथ ॥४७॥
किं कारणं कालमवेक्ष्य तायी क्षणञ्च दृष्ट्वा ततु[3] पश्च भाषते ।
सोऽयं क्षणो अद्य कथञ्चि लब्धो वदामि येनेह च भूतनिश्चयम् ॥४८॥
नवाङ्गमेतन्मम शासनञ्च प्रकाशितं सत्त्वबलाबलेन ।
उपाय एषो वरदस्य ज्ञाने प्रवेशनार्थाय निदर्शितो मे ॥४९॥
भवन्ति ये[4] चेह सदा विशुद्धा व्यक्ता शुची सूरत बुद्धपुत्राः ।
कृताधिकारा बहुबुद्धकोटिषु वैपुल्यसूत्राणि वदामि तेषाम् ॥५०॥
तथा हि ते आशयसंपदाय विशुद्धरूपाय समन्विताभून्[5] ।
वदामि तान् बुद्ध भविष्यथेति अनागतेऽध्वानि हितानुकम्पकाः ॥५१॥
श्रुत्वा च प्रीतिस्फुट भोन्ति सर्वे बुद्धा भविष्याम जगत्प्रधानाः ।
पुनश्च हं जानिय तेष चर्यां वैपुल्यसूत्राणि प्रकाशयामि ॥५२॥
इमे च ते श्रावक नायकस्य येहि श्रुतं शासनमेतमग्रयम् ।
एकापि गाथा श्रुत धारिता वा सर्वेष बोधाय[6] न संशयोऽस्ति ॥५३॥
एकं हि यानं द्वितियं न विद्यते तृतियं हि नैवास्ति कदाचि लोके ।
अन्यत्रुपाया पुरुषोत्तमानां यद्यानननात्वुपदर्शयन्ति ॥५४॥
बौद्धस्य ज्ञानस्य प्रकाशनार्थं लोके समुत्पद्यति लोकनाथः ।
एकं हि कार्यं द्वितियं न विद्यते न हीनयानेन नयन्ति बुद्धाः ॥५५॥

1 B. ०यामि
2 B. ०के
3 B. न तु
4 B. मे
5 B. ०भूत
6 B. बोधीय

प्रतिष्ठितो यत्र स्वयं स्वयम्भूर्यच्चैव बुद्धं यथ यादृशं च।
बलाश्च[1] ये ध्यानविमोक्ष-इन्द्रियास्तत्रैव सत्त्वा पि प्रतिष्ठपेति ॥५६॥
मात्सर्यदोषो हि भवेत मह्यं स्पृशित्व बोधिं विरजां विशिष्टाम्।
यदि हीनयानस्मि प्रतिष्ठपेयमेकं पि सत्त्वं न ममेतु साधु ॥५७॥
मात्सार्य मह्यं न कहिंचि विद्यते ईर्ष्या न मे नापि च छन्दरागः।
उच्छिन्नपापा मम सर्वधर्मास्तेनास्मि बुद्धो जगतोऽनुबोधात्[2] ॥५८॥
यथा ह्यहं चित्रितु लक्षणेहि प्रभासयन्तो इमु सर्वलोकम्।
पुरस्कृतः प्राणिशतैरनेकैर्देशेमिमां धर्मस्वभावमुद्राम् ॥५९॥
एवञ्च चिन्तेम्यहु शारिपुत्र कथं नु एवं भवि सर्वसत्त्वाः
द्वात्रिंशतीलक्षणरूपधारिणः स्वयंप्रभा लोकविदू स्वयम्भूः ॥६०॥
यथा च पश्यामि यथा च चिन्तये यथा च सङ्कल्प ममासि पूर्वम्।
परिपूर्णमेतत् प्रणिधानु[3] मह्यं बुद्धा च बोधिं च[4] प्रकाशयामि ॥६१॥
सचेदहं शारिसुता वदेयं सत्त्वान बोधाय जनेथ छन्दम्।
अजानकाः सर्व भ्रमेयुरत्र न जातु गृह्णीयु सुभाषितं मे ॥६२॥
तांश्चैव हं जानिय एवरूपान्न चीर्णचर्याः पुरिमासु जातिषु।
अध्योषिताः कामगुणेषु सक्तास्तृष्णाय संमूर्छित मोहचित्ताः ॥६३॥
ते कामहेतोः प्रपतन्ति दुर्गतिं षट्सू गतीषू परिखिद्यमानाः।
कटसी च वर्धेन्ति पुनः पुनस्ते दुःखेन संपीड़ित अल्पपुण्याः ॥६४॥
विलग्न दृष्टीगहनेषु नित्यमस्तीति नास्तीति तथास्ति नास्ति।
द्वाषष्टिदृष्टीकृत निश्चयित्वा[5] असन्तभावं परिगृह्य ते स्थिताः ॥६५॥
दुःशोधका मानिन[6] दम्भिनश्च वङ्काः शठा अल्पश्रुताश्च बालाः।
ते नैव शृण्वन्ति सुबुद्धघोषं कदाचिपि जाति[7] सहस्रकोटिषु ॥६६॥
तेषामहं शारिसुता उपायं वदामि दुःखस्य करोथ अन्तम्।
दुःखेन संपीड़ित दृष्ट्व सत्त्वान्निर्वाण तत्राप्युपदर्शयामि ॥६७॥
एवं च भाषाम्यहु नित्यनिर्वृता आदिप्रशान्ता इमि सर्वधर्माः।
चर्यां च सो[8] पूरिय बुद्धपुत्रो अनागतेऽध्वानि जिनो भविष्यति ॥६८॥

---

1 J. बला च
2 B. जगतानुबो०
3 B. ०धान
4 J. नो
5 J. निश्रयित्वा
6 B. मानि च
7 B. जाति०
8 B. यो

उपायकौशल्य ममैवरूपं यत् त्रीणि यानान्युपदर्शयामि ।
एकं तु यानं हि नयश्च एक एका चियं देशन नायकानाम् ॥६९॥
व्यपनेहि काङ्क्षां तथ संशयं च येषां च केषां चिह काङ्क्ष विद्यते ।
अनन्यथावादिन लोकनायका एकं इदं यानु द्वितीयु[1] नास्ति ॥७०॥
ये चाप्यभूवन् पुरिमास्तथागताः परिनिर्वृता बुद्धसहस्रनेके ।
अतीतमध्वानमसंख्यकल्पे तेषां प्रमाणं न कदाचि विद्यते ॥७१॥
सर्वेहि तेहि[2] पुरुषोत्तमेहि प्रकाशिता धर्म बहू विशुद्धाः ।
दृष्टान्तकैः कारणहेतुभिश्च उपायकौशल्यशतैरनेकैः ॥७२॥
सर्वे च ते दर्शयि एकयानमेकं च यानं अवतारयन्ति ।
एकस्मि याने परिपाचयन्ति अचिन्तिया प्राणिसहस्रकोट्यः ॥७३॥
अन्ये उपाया विविधा जिनानां येही प्रकाशेन्तिममग्रधर्मम् ।
ज्ञात्वाधिमुक्तिं तथ आशयं च तथागता[3] लोकि सदेवकस्मिन् ॥७४॥
ये चापि सत्त्वास्तहि तेष संमुखं श्रृण्वन्ति धर्मं अथ वा श्रुताविनः ।
दानश्च दत्तं चरितश्च शीलं क्षान्त्या च संपादित सर्वचर्याः ॥७५॥

---

M. 69 ... ... ... ... vad[e]m[i] ।
... ... ... nayaśca ekāṃ ayāṃ c... ॥
M. 70 ... ... ... ... ... ... ।
......[vā]d...jinastathāgata [yā]na dvitī[ya] nāsti ॥
M. 71 Ye pi...[a]bhūṣi p ... ... ... ।
... ... ... na kadāci v[id]yate ॥
M. 72 ... puru[ṣ]ottamebhiḥ pra[kāśi]tā dharmabahu...a... ।
... ... ... ... ... ... ॥
M. 73 ... ...[e]kayāna ekaṃ ca yānaṃ a[va]tārayanti ।
ekasmi yāne paripāca[yanti]...ac...nt...y... ... ॥
M. 74 ... m[i] agradharmā... ... ... ... ।
adhimuktijñā[tvā]...āśayaṃ ca tathā tathā lok...sa... ॥
M. 75 ye c... ... ... ... ... ।
... [śī]lakṣāntī ca[saṃ]p[ā]dita bra... ॥

---

1 B. यान द्वितीय
2 J. तेही
3 B. तथागतो

वीर्येण ध्यानेन[1] कृताधिकाराः प्रज्ञाय वा चिन्तित एति धर्माः ।
विविधानि पुण्यानि कृतानि येहि ते सर्वि बोधाय[2] अभूषि लाभिनः ॥७६॥
परिनिर्वृतानाञ्च जिनान तेषां ये शासने केचिदभूषि सत्त्वाः ।
क्षान्ता च दान्ता च विनीत तत्र ते सर्वि बोधाय[2] अभूषि लाभिनः ॥७७॥
ये यापि धातून करोन्ति पूजां जिनान तेषां परिनिर्वृतानाम् ।
रत्नामयान् स्तूपसमहस्रनेकान सुवर्णरूप्यस्य च स्फाटिकस्य ॥७८॥
ये चाश्मगर्भस्य करोन्ति स्तूपान् कर्केतना[3]मुक्तमयाश्च केचित् ।
वैडूर्यश्रेष्ठस्य तथैन्द्रनीलान्[4] ते सर्वि बोधाय[5] अभूषि लाभिनः ॥७९॥
ये चापि शैलेषु करोन्ति स्तूपान् ये चन्दनानामगुरुस्य केचित् ।
ये देवदारुस्य करोन्ति स्तूपान् ये दारुसंघातमयांश्च केचित् । ८०॥
इष्टामयान् मृत्तिकसञ्चितान् वा प्रीताश्च कुर्वन्ति जिनान स्तूपान् ।
उद्दिश्य ये पांसुकराशयोऽपि अटवीषु दुर्गेषु च कारयन्ति ॥८१॥
सिकतामयान् वा पुन कूट कृत्वा ये केचिदुद्दिश्य जिनान स्तूपान् ।
कुमारकाः क्रीड़िषु तत्र तत्र ते सर्वि बोधाय[5] अभूषि लाभिनः ॥८२॥

---

M. 76 [Vīr]yy[e]ṇa dhyānebhi kṛ[tā]dhik...cintayi... ।
M. 77 Parinirvṛtānāṃ pi jināna te...[śā]sane keci abhūṣi satvā ।
kṣāntā ca ... ......[vi]nīta saman ...... ॥
M. 78 ... [jin]āna teṣāṃ parinirvṛtānāṃ ... ।
Ratna...s[thū]pasahasrakoṭayaḥ suvarṇarū...sphāṭik ॥
M. 79 Ya sphāṭikāyā suviśiṣṭa ... ... ।
... ... sarvbi bodhāya abhūṣī lā[bhina] ॥
M. 80 ... pa ... ... ... ।
Ye devadārusya karinsu sth[ūpān ye dā]rusaṃghāta karimsu ke-cit ॥
M. 81 ... ... vā ... ... ।
... ... ... aṭaveṣu durgeteṣu karin[su] ॥
M. 82 Sikatāmayaṃ vā punaḥ ku...[ud]diśya...rā ... ।
... ... ... ... ... [lābh]ina ॥

---

1 B. वीर्ये च ध्याने च
2 B. बोधीय
3 B. ०तन०
4 B. ०नीले
5 B. बोधीय

रत्नामया[1] बिम्ब तथैव केचिद्द्वात्रिंशतीलक्षणरूपधारिणः ।
उद्दिश्य कारापित येहि चापि ते सर्वि बोधाय[2] अभूषि लाभिनः ॥८३॥
ये सप्तरत्नामय तत्र केचिद् ये ताम्रिका वा तथ कांसिका वा ।
कारापयीषु सुगतान बिम्बा ते सर्वि बोधाय[2] अभूषि लाभिनः ॥८४॥
सीसस्य लोहस्य च मृत्तिकाय वा कारापयीषु सुगतान विग्रहान् ।
ये पुस्तकर्मामय दर्शनीयांस्ते सर्वि बोधाय[2] अभूषि लाभिनः ॥८५॥
ये चित्रभित्तीषु करोन्ति विग्रहान् परिपूर्णगात्राञ् शतपुण्यलक्षणान् ।
लिखेत् स्वयं चापि लिखापयेद्वा ते सर्वि बोधाय[2] अभूषि लाभिनः ॥८६॥
ये चापि केचित्तहि शिक्षमाणाः क्रीड़ारतिं चापि विनोदयन्तः ।
नखेन काष्ठेन कृतासि[3] विग्रहान् भित्तीषु पुरुषा च कुमारका वा[4] ॥८७॥
सर्वे च ते कारुणिका अभूवन् सर्वेऽपि ते तारयि प्राणिकोट्यः ।
समादपेन्ता बहुबोधिसत्त्वांस्ते सर्वि बोधाय अभूषि लाभिनः[5] ॥८८॥
धातूषु यैश्चापि[6] तथागतानां स्तूपेषु वा मृत्तिकविग्रहेषु वा ।
आलेख्य भित्तीष्वपि पांसुस्तूपे पुष्पा च गन्धा च प्रदत्त आसीत् । ८९॥

---

M. 83 Ratnamayāṃ [b]imba...rayittha dvātrīśatī lakṣaṇarupa...।
[U]ddiśya kārāpi ... ... ... ॥
M. 84 ... ... ... ye tamraka ca...kā vā ।
Kārāpitāsi suga ... s...rvbi bo ... ... ॥
M. 85 ... ... ... ... yinsu[su]gatāna vigrahā ।
... ... ddha atidarśanīyās...[abhū]ṣilābhi[na] ॥
M. 86 ... ... ... ]la]kṣaṇā ।
Likhīstvayam ... ikhāpayā vā te pi.. abhūṣī ... ॥
M. 87 ... · [si]kmā ... ।
... na kāṣṭena ... ālikh ... ॥
M. 88 ... ṣu puruṣā va kumāraka[v]ā sarvbe cabodhāy[a] ।
... ... ... hubodhisatva ... ॥
M. 89 ...ga gatā ... ... dhātuṣ[u] stūpeṣu ... mṛttik ... ... ।
... ... ... ... ... ... ॥

---

1 B. ०मयान् 2 B. बोधीय 3 J. कृतावि

4 B. विग्रहांस्ते सर्वि बोधीय अभूषि लाभिनः ॥८७॥

5 B. भित्तीषु पुरुषा च कुमारका वा सर्वे च ते कारुणिका अभूवन् ।
सर्वेऽपि ते तारयि प्राणिकोटयः समासपेन्ता बहुबोधि सत्त्वान् ॥८८॥

6 B. ये चापि

वाद्या च वादापित येहि तत्र भेर्योऽथ शङ्खाः पटहाः सुघोषकाः ।
निर्नादिता दुन्दुभयश्च येहि पूजाविधानाय वराग्रबोधिनाम् ॥९०॥
वीणाश्च ताड़ा पणवाश्च येहि मृदङ्ग वंशा तुणवा[1] मनोज्ञाः ।
एकोत्सवा वा सुकुमारका वा ते सर्वि बोधाय[2] अभूषि लाभिनः ॥९१॥
वादापिता झल्लरियोऽपि येहि जलमण्डका चर्पटमण्डका[3] वा ।
सुगतान उद्दिश्यथ पूजनार्थं गीतं सुगीतं[4] मधुरं मनोज्ञम् ॥९२॥
सर्वे च ते बुद्ध अभूषि लोके कृत्वान तां बहुविधधातुपूजाम् ।
किमल्पकं पि सुगतान धातुषु एकं पि वादापिय वाद्यभाण्डम् ॥९३॥
पुष्पेन चैकेन पि पूजयित्वा आलेख्यभित्तौ सुगतान् बिम्बान्[5] ।
विक्षिप्तचित्ता पि च पूजयित्वा अनुपूर्व द्रक्ष्यन्ति च[6] बुद्धकोटयः ॥९४॥
यैश्चाञ्जलि तत्र कृतोऽपि स्तूपे परिपूर्ण एका तलशक्तिका वा ।
उन्नामितं शीर्षमभून्मुहूर्तमवनामितः[7] कायु तथैकवारम् ॥९५॥
नमोऽस्तु बुद्धाय[8] कृतैकवारं येही तदा धातुधरेषु तेषु ।
विक्षिप्तचित्तैरपि एकवारं ते सर्वि प्राप्ता इममग्रबोधिम् ॥९६॥
सुगतान तेषां तद तस्मिकाले परिनिर्वृतानामथ तिष्ठतां वा ।
ये धर्मनामापि श्रुणिंसु[9] सत्त्वास्ते सर्वि बोधाय[10] अभूषि लाभिनः ॥९७॥

---

M. 90 ... ... ... khā paṭa ... ।
... irnāditaṃ d...m...bh...yāc...ā... ... ॥
M. 93 ... ... ... ... ... ।
... ... ekaṃ pi vādyabhāṇḍa ... ... ॥
M. 94 Ekena puṣpena pi pū ... ... ... ।
... ... ... ... ... ॥
M. 95 ...i tatra kṛtāsi sthūpe pavipū[r]ṇṇa ekā......śaktikā vā ।
Unnāmitaṣīrṣa abh...ta[ṃ] hetu-kṣayā ca(?)jyotim ॥
M. 97 ...tāna teṣāṃ tadasmiṃ kāle parinirvṛ...tha tiṣṭhamāna ।
ye dharmavāsaṃ va śruṇ......bhuṣi... l...... ... ॥

---

1 B. प्रणादा 2 B. बोधीय
3 B. वाप्यथ॰ 4 A. गीतं च गीतं 5 B. बिम्बम् 6 B. ति
7 B. ॰नामितं 8 J. बुद्धान 9 B. श्रुणेन्सु
10 B. बोधीय

अनागता पी[1] बहुबुद्धकोट्यो अचिन्तिया येषु प्रमाणु नास्ति ।
ते पी जिना उत्तमलोकनाथाः प्रकाशयिष्यन्ति उपायमेतम् ॥९८॥
उपायकौशल्यमनन्तु तेषां भविष्यति लोकविनायकानाम् ।
येना[2] विनेष्यन्तिह प्राणकोट्यो बौद्धस्मि ज्ञानस्मि अनास्रवास्मिन् ॥९९॥
एकोऽपि सत्त्वो न कदाचि तेषां श्रुत्वान धर्मं न भवेत[3] बुद्धः ।
प्रणिधानमेतद्धि तथागतानां चरित्व बोधाय चरापयेयम् ॥१००॥
धर्मामुखा[4] कोटिसहस्रनेके प्रकाशायिष्यन्ति अनागतेऽध्वे ।
उपदर्शयन्तो इममेकयानं वक्ष्यन्ति धर्मं हि तथागतत्वे ॥१०१॥
स्थितिका हि एषा सद् धर्मनेत्री प्रकृतिश्च धर्माण सदा प्रभा-
विदित्व बुद्धा द्विपदानमुत्तमा प्रकाशायिष्यन्तिममेकयानम् ॥१०२॥
धर्मस्थितिं धर्मनियामतां च नित्यस्थितां लोकि इमामकम्प्याम् ।
बुद्धाश्च बोधिं पृथिवीय मण्डे प्रकाशायिष्यन्ति उपायकौशलम् ॥१०३॥
दशसू दिशासू नरदेवपूजितास्तिष्ठन्ति बुद्धा यथ गङ्गवालिकाः ।
सुखापनार्थं इह सर्वप्राणिनां ते चापि भाषन्तिममग्रबोधिम् ॥१०४॥

---

M. 98 ... ... ... ... ... ।
... ma lokanāyakā upāyajñene...ā śiṣyāsti ॥

M. 99 upāyakauśalya a...ti lokavināyakān[ām] ।
... ... ... ... ... ... ॥

M. 100 ... [ka]dāci teṣāṃ śrutvāna dharmaṃ na bhavey... [buddhhā]m ।
Praṇidhānametādṛśa nāyakānāṃ caritva bodhāya carā... ॥

M. 101 ... ... ... ... ... ।
... darśayantāstathāgatatvā ya va[kṣyanti dharmaṃ]... ॥

M. 102 kṛtikā hi eṣā sa...buddhanetr...prak(ṛ)tiṃ ...... ।
... ... ... ... ... ॥

M. 103 [sthi]ti dharmaniyāmatā ca [n]ityasthititi loki ima[ma] kampikam ।
... ... mahim...maṇḍena ji...n...vināyaka upā ...... ॥

M. 104 ... ... ... ... ।
... iha sa...[prā]ṇināṃ te cāpi bhāṣanti mi agradhavma ॥

---

1 B. पि
2 J. येन
3 B. भवेय
4 B. धर्मासुखा

उपायकौशल्य प्रकाशयन्ति विविधानि यानान्युपदर्शयन्ति ।
एकञ्च यानं परिदीपयन्ति बुद्धा इमामुत्तमशान्तभूमिम् ॥१०५॥
चरितञ्च ते जानिय सर्वदेहिनां यथाशयं यच्च पुरा निषेवितम् ।
वीर्यं च स्थामं च विदित्व तेषां ज्ञात्वाधिमुक्तिं च प्रकाशयन्ति ॥१०६॥
दृष्टान्तहेतून् बहु दर्शयन्ति बहुकारणाञ्च् ज्ञानबलेन नायकाः ।
नानाधिमुक्तांश्च विदित्व सत्त्वान्नानाभिनिर्हारुपदर्शयन्ति ॥१०७॥
अहं पि च तर्हि जिनेन्द्रनायको उत्पन्न सत्त्वान सुखापनार्थम् ।
संदर्शयामी[1] इम बुद्धबोधिं नानाभिनिर्हारसहस्रकोटिभिः ॥१०८॥
देशेमि धर्मं च बहुप्रकारं अधिमुक्तिमध्याशय ज्ञात्व प्राणिनाम् ।
संहर्षयामी[1] विविधैरुपायैः प्रत्यात्मिकं ज्ञानबलं ममैतत् ॥१०९॥
अहं पि पश्यामि दरिद्रसत्त्वान् प्रज्ञाय पुण्येहि च विप्रहीणान् ।
प्रस्कन्द[2] संसारि निरुद्ध दुर्गे मग्नाः पुनर्दुःखपरम्परासु ॥११०॥
तृष्णाविलग्नांश्चमरीव बाले कामैरिहान्धीकृतसर्वकालम् ।
न बुद्धमेषन्ति महानुभावं न धर्मं मार्गन्ति दुखान्तगामिनम् ॥१११॥

---

M. 105 ...pā...kośalyaprakāśay ... ... ... ।
... ... ... ... ... ॥
M. 106 ...jā...r[vba]prāṇināṃ adyāśayaṃ ya purimaṃ ni ।
vīryyaṃ ca sthāmaṃ ca ... ... ... ॥
M. 107 ... ... ... ... ... ।
... ... ... nirhārapadarśa... ॥
M. 108 Ahaṃ pi ... ... ... ... ।
... ... ... ... ... ॥
M. 109 ...adhimukti adyāś ..jñātvā prāṇ ... ... ।
... ... ... ... ... ॥
M. 110 ... ... ... ... ... ।
Pra[s]kandha saṃsār...durg...ruddhā muci...
[duḥ]khaparaṃparāya ॥
M. 111 ... ... ... ... ... ।
... ... ... nt[i] duḥkhā...[gā]mim ॥

---

1 B. ०मि 2 J. प्रस्कन्न

गतीषु षट्सु परिरुद्धचित्ताः[1] कुदृष्टिदृष्टीषु स्थिता अकम्प्याः ।
दुःखातु[2] दुःखानुप्रधावमानाः[3] कारुण्य मह्यं बलवन्तु तेषु ॥११२॥
सोऽहं विदित्वा तहि बोधिमण्डे सप्ताह त्रीणि[4] परिपूर्ण संस्थितः ।
अर्थं [5]विचिन्तेमिममेवरूपं उल्लोकयन् पादपमेव तत्र ॥११३॥
प्रेक्षामि तं चानिमिषं द्रुमेन्द्रं तस्यैव हेष्टे अनुचंक्रमामि[6] ।
आश्चर्यज्ञानञ्च इदं विशिष्टं सत्त्वाश्च मोहान्ध अविद्वसू इमे ॥११४॥
ब्रह्मा च मां याचति तस्मि काले शक्रश्च चत्वारि च लोकपालाः ।
महेश्वरो ईश्वर एव चापि मरुद्गणानाञ्च सहस्रकोट्यः ॥११५॥
कृताञ्जली सर्वि स्थिताः सगौरवा अर्थं च चिन्तेमि कथं करोमि ।
अहञ्च बोधीय[7] वदामि वर्णान् इमे च दुःखैरभिभूत सत्त्वाः ॥११६॥
ते मह्य धर्मं क्षिपि बालभाषितं क्षिपित्व गच्छेयुरपायभूमिम् ।
श्रेयो ममा[8] नैव कदाचि भाषितुं अद्यैव मे निर्वृतिरस्तु शान्ता ॥११७॥

---

M. 112 Ṣaṭsu[ga]tiṣu paliguddha-c...kudṛ...dṛṣṭīsu sthitā a...।
... ... ... ... ... ॥
M. 113 ...[bo]dhimaṇḍe saptāhtrīṇi paripū[r]ṇa... ...
Arthaṃ vicintemi katha[ṃ] karom[i]...taṃ (?)pāda-polok... ॥
M. 114. ... ... ... ... ।
...[jñā]naṃ ca imaṃ viśiṣṭaṁ...atvācca[mohāndha] avidvasacca ॥
M. 115 Brahmāśca...yācati tas ... ... ।
... ... ... ... ... ॥
M. 116 Kṛtāñjali sarvbi sthi...sagaura[vā]...aṃ ca cintemi kathaṃ karomi ।
... ...ahaṃ ca bodhāya ... ... ॥
M. 117 ... ...[kṣi]pitva gaccheyu apāyabhum[i]m ।
Śreyo mama naiva kadāci..[ṣ]i...me nirvṛti botu kṛ[tā] ॥

---

1 J. परिगृद्ध॰ 2 J. दुःखेन 3 B, दुःखं प्रतिवेदमानाः
4 J. ॰णी 5 B. हि
6 B. ॰ङ्क्रयामि 7 J. बोधाय 8 B. मम

पुरिमांश्च बुद्धान् समनुस्मरन्तो उपायकौशल्यु[1] यथा च तेषाम् ।
यं नून हं पि[2] इम बुद्धबोधिं त्रिधा विभज्येह[3] प्रकाशयेयम् ॥११८॥
एवं च मे चिन्तितु एष धर्मो ये चान्ये[4] बुद्धा दशसु दिशासु ।
दर्शिन्सु ते मह्य तदात्मभावं साधुं ति घोषं समुदीरयन्ति ॥११९॥
साधू मुने लोकविनायकाग्र अनुत्तरं ज्ञानमिहाधिगम्य ।
उपायकौशल्यु विचिन्तयन्तो अनुशिक्षसे लोकविनायकानाम् ॥१२०॥
वयं पि बुद्धाय परं[5] तदा पदं तृधा च कृत्वान प्रकाशयामः ।
हीनाधिमुक्ता हि अविद्वसू नरा भविष्यथा बुद्ध न श्रद्दधेयुः ॥१२१॥
ततो वयं कारणसंग्रहेण उपायकौशल्य निषेवमाणाः ।
फलाभिलाषं परिकीर्तयन्तः समादपेमो बहुबोधिसत्त्वान् ॥१२२॥
अहं चुदग्रस्तद आसि श्रुत्वा घोषं मनोज्ञं पुरुषर्षभाणाम् ।
उदग्रचित्तो भणि तेष तायिनां न मोहवादी प्रवरा महर्षी[6] ॥१२३॥

---

M. 118 … … … … … ।
… ima buddhabodhitrividhākara… [pra]-
kāśayeyam ॥
M. 119 Evaṃ ca …m . . … e… ye ca an … ।
… … … … … ॥
M. 120 Sādhu mune lokavināy…gr…anuttarāṃ dharma
imādhigam… ।
… … … … … ॥
M. 121 … …[tr]idhā karitvāna prakāśayāma ।
hī…[dhi]muktā hi narā avidvaso buddh … ॥
M. 122 … … … … … ।
… …yanto samā…pemo bahu bo…satvā ॥

---

1 B. ०ल्य
2 J. ०पी
3 B. विभाष्येह
4 J. चान्य
5 J. ०द्धा परमं
6 Tib. 23b, l. 4: སྐྱེས་བུ་ཁྱུ་མཆོག་དག་གི་ཡིད་འོང་སྒྲ །
ཐོས་ནས་དེ་ཚེ་ང་ནི་དགའ་བར་གྱུར །
དགའ་བའི་སེམས་ཀྱིས་སྨྲོད་པ་དེ་དག་ལ །
དྲང་སྲོང་ཆེ་མཆོག་དོན་ཡོད་གསུང་བ་སྟེ ༎

अहं पि एवं समुदाचरिष्ये यथा वदन्ती[1] विदु लोकनायकाः ।
अहं पि संक्षोभि इमस्मि दारुणे उत्पन्न सत्त्वान कषायमध्ये ॥१२४॥
ततो ह्यहं शारिसुता विदित्वा वाराणसीं प्रस्थितु तस्मि काले ।
तहि पञ्चकानां प्रवदामि भिक्षुणां धर्मं उपायेन प्रशान्तभूमिम् ॥१२५॥
ततः प्रवृत्तं मम धर्मचक्रं निर्वाणशब्दश्च अभूषि लोके ।
अर्हन्तशब्दस्तथ धर्मशब्दः संघस्य शब्दश्च अभूषि तत्र[2] ॥१२६॥
भाषामि वर्षाणि अनल्पकानि निर्वाणभूमिं चुपदर्शयामि ।
संसारदुःखस्य च एष अन्तो एवं वदामी[3] अहु नित्यकालम् ॥१२७॥
यस्मिंश्च काले अहु शारिपुत्र पश्यामि पुत्रान् द्विपदोत्तमानाम् ।
ये प्रस्थिता उत्तममग्रबोधिं कोटीसहस्राणि अनल्पकानि ॥१२८॥
उपसंक्रमित्वा च ममैव अन्तिके कृताञ्जलीः सर्वि स्थिताः सगौरवाः ।
येही श्रुतो धर्म जिनान आसीत् उपायकौशल्यु[4] बहुप्रकारम् ॥१२९॥
ततो ममा[5] एतदभूषि तत्क्षणं समयो ममा[5] भाषितुमग्रधर्मम् ।
यस्याहमर्थं इह लोकि जातः प्रकाशयामी[6] तमिहाग्रबोधिम् ॥१३०॥
दुःश्रद्दधं एतु भविष्यतेऽद्य निमित्तसंज्ञानिह[7] बालबुद्धिनाम् ।
अधिमानप्राप्तान अविद्वसूनां इमे तु श्रोष्यन्ति हि बोधिसत्त्वाः ॥१३१॥
विशारदश्चाहु तदा प्रहृष्टः संलीयनां सर्व विवर्जयित्वा ।
भाषामि मध्ये सुगतात्मजानां तांश्चैव बोधाय समादपेमि[8] ॥१३२॥

---

1 B. ०न्ति

2 Tib. 23b, 1. 6: དེ་ནས་ང་ཡིས་ཆོས་ཀྱི་འཁོར་ལོ་བསྐོར། ।
མྱ་ངན་འདའ་བའི་སྒྲ་ཡང་འཇིག་རྟེན་བྱུང་། ।
དགྲ་བཅོམ་སྒྲ་དང་དེ་བཞིན་ཆོས་ཀྱི་སྒྲ། ।
དགེ་འདུན་སྒྲ་ཡང་དེ་ཚེ་བྱུང་བར་གྱུར། ॥

3 B. ०मि    4 B, ०ल्य    5 B. मम

6 B. ०मि    7 B. ०ज्ञीनिह

8 Tib. 24a. 1, 3: དེ་ཚེ་ང་ནི་འཇིགས་མེད་རབ་ཏུ་དགའ། ।
ཡང་དག་ཉང་འཛོག་ཐམས་ཅད་རྣམ་སྤངས་ནས། ।

संदृश्य चैतादृशबुद्धपुत्रांस्तवापि काङ्क्षा व्यपनीत भेष्यति ।
ये चा शता द्वादशिमे अनास्रवा बुद्धा भविष्यन्तिमि लोकि सर्वे ॥133॥
यथैव तेषां पुरिमाण तायिनां अनागतानाञ्च जिनान धर्मता ।
ममापि एषैव विकल्पवर्जिता तथैव हं देशयि अद्य तुभ्यम् 134॥
कदाचि कहिाच कथंचि लोके उत्पादु भोति पुरुषर्षभाणाम् ।
उत्पद्य चा लोकि अनन्तचक्षुषः कदाचिदेतादृशु धर्म देशयुः ॥135॥
सुदुर्लभो ईदृशु अग्रधर्मः कल्पान कोटीनयुतैरपि स्यात् ।
सुदुर्लभा ईदृशकाश्च सत्त्वाः श्रुत्वान ये श्रद्दधि अग्रधर्मम् ॥136॥
औदुम्बरं पुष्प यथैव दुर्लभं कदाचि कहिंचि[1] कथंचि दृश्यते ।
मनोज्ञरूपं च जनस्य तद् भवेदाश्चर्यु[2] लोकस्य सदेवकस्य[3] ॥137॥
अतश्च आश्चर्यतरं वदामि श्रुत्वान यो धर्ममिमं सुभाषितम् ।
अनुमोदि एकं पि भणेय वाचं कृत सर्वबुद्धान भवेय पूजा ॥138॥
व्यपनेहि काङ्क्षामिह संशयं च आरोचयामि[4] अहु धर्मराजा ।
समादपेमि[4] अहमग्रबोधौ न श्रावकाः केचिदिहास्ति मह्यम् ॥139॥
तव शारिपुत्रैतु रहस्यु भोतु ये चापि मे श्रावक मह्य सर्वे ।
ये बोधिसत्त्वाश्च इमे प्रधाना रहस्यमेतन्मम धारयन्तु ॥140॥
किं कारणं पञ्चकषायकाले क्षुद्राश्च दुष्टाश्च भवन्ति सत्त्वाः ।
कामैरिहान्धीकृत बालबुद्धयो न तेष बोधाय कदाचि चित्तम् ॥141॥

---

བདེ་བར་གཤེགས་པའི་སྲས་ཀྱི་དབུས་སུ་བཤད། །
དེ་དག་བྱང་ཆུབ་ལ་ནི་ཡང་དག་བརྩོན། ‖

1 J. कश्चिच

2 B. ०र्यं

3 Tib. 24a, l. 6-7: ཨུ་དུམ་བཱ་རའི་མེ་ཏོག་རྙེད་དཀའ་བཞིན། །
རེས་འགའ་གང་ཞིག་ཅི་ཡིས་སྣང་གྱུར་ན། །
གཟུགས་དེ་འགྲོ་བའི་ ཡིད་དུ་ འོང་བ་སྟེ། །
ལྷར་བཅས་ འཇིག་རྟེན་རྣམས་ལ་ ངོ་མཚར་འགྱུར། ‖

4 J. ०पी

श्रुत्वा च यानं मम एतदेकं प्रकाशितं तेन जिनेन आसीत् ।
अनागतेऽध्वानि भ्रमेयु सत्त्वाः सूत्रं क्षिपित्वा नरकं व्रजेयुः ॥१४२॥
लज्जी शुची ये च भवेयु सत्त्वाः संप्रस्थिता[1] उत्तममग्रबोधिम् ।
विशारदो भूत्व वदेमि तेषामेकस्य यानस्य अनन्तवर्णान् ॥१४३॥
एतादृशी देशन नायकानामुपायकौशल्यमिदं वरिष्ठम् ।
बहुहि[2] सन्धावचनेहि चोक्तं दुर्बोध्यमेतं हि अशिक्षितेहि ॥१४४॥
तस्माद्धि सन्धावचनं विजानिया बुद्धान लोकाचरियाण तायिनाम् ।
जहित्व काङ्क्षां विजहित्व संशयं भविष्यथा बुद्ध जनेथ हर्षम्[3] ॥१४५॥

इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याय उपायकौशल्यपरिवर्तो
नाम द्वितीयः ॥२॥

---

1 J. सत्त्वा ये प्रस्थिता

2 B. बहूनि

3 Tib. 24b, l. 5

# औपम्य-परिवर्तः

अथ खल्वायुष्मान् शारिपुत्रस्तस्यां वेलायां तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातो येन भगवांस्तेनाञ्जलिं प्रणम्य भगवतोऽभिमुखो भगवन्तमेव व्यवलोकयमानो भगवन्तमेतदवोचत्। आश्चर्याद्भुतप्राप्तोऽस्मि भगवन्नौद्बिल्यप्राप्त इदमेवंरूपं भगवतोऽन्तिकाद् घोषं श्रुत्वा। तत् कस्य हेतोः। अश्रुत्वैव तावदहं भगवन्निदमेवंरूपं भगवतोऽन्तिकाद् धर्मं तदन्यान् बोधिसत्त्वान् दृष्ट्वा बोधिसत्त्वानां चानागतेऽध्वनि बुद्धनाम[1] श्रुत्वातीव शोचाम्यतीव सन्तप्ये भ्रष्टोऽस्म्येवंरूपात् तथागतज्ञानगोचराज् ज्ञानदर्शनात्। यदा चाहं भगवन्नभीक्ष्णं गच्छामि पर्वतगिरिकन्दराणि वनषण्डान्यारामनदीवृक्षमूलान्येकान्तानि दिवा-विहाराय तदाप्यहं भगवन् यद्भूयस्त्वेनानेनैव विहारेण विहरामि। तुल्ये नाम[2] धर्मधातुप्रवेशे वयं भगवता हीनेन यानेन निर्यातिताः। एवं च मे भगवंस्तस्मिन् समये भवत्यस्माकमेवैषोऽपराधो नैव भगवतोऽपराधः। तत् कस्य हेतोः। सचेद् भगवानस्माभिः प्रतीक्षितः स्यात् सामुत्कर्षिकीं धर्मदेशनां कथयमानो यदिदमनुत्तरां सम्यक्सम्बोधिमारभ्य तेष्वेव वयं भगवन् धर्मेषु निर्याताः स्याम। यत् पुनर्भगवन्नस्माभिरनुपस्थितेषु बोधिसत्त्वेषु संधाभाष्यं भगवतोऽजानमानैस्त्वरमाणैः प्रथमभाषितैव तथागतस्य धर्मदेशना श्रुत्वोद्गृहीता धारिता भाविता चिन्तिता मनसिकृता। सोऽहं भगवन्नात्मपरिभाषणयैव भूयिष्ठेन रात्रिंदिवान्यतिनामयामि। अद्यास्मि भगवन् निर्वाणप्राप्तः। अद्यास्मि भगवन् परिनिर्वृतः। अद्य मे भगवन्नर्हत्त्वं प्राप्तम्। अद्याहं भगवन् भगवतः पुत्रो ज्येष्ठ औरसो मुखतो[3] जातो धर्मजो धर्मनिर्मितो धर्मदायादो धर्मनिर्वृत्तः। अपगतपरिदाहोऽस्म्यद्य भगवन्निममेवंरूपमद्भुतधर्ममश्रुतपूर्वं भगवतोऽन्तिकाद् घोषं श्रुत्वा।

अथ खल्वायुष्मान् शारिपुत्रस्तस्यां वेलायां भगवन्तमाभिर्गाथाभिरध्य-भाषत।

---

1 J. बुद्धनामं   2 B. तुल्यनाम॰   3 B. सुखतो

आश्चर्यप्राप्तोऽस्मि महाविनायक औद्बिल्यजातो इमु घोष श्रुत्वा।
कथंकथा मह्य न भूय काचित् परिपाचितोऽहं इह अग्रयाने ॥१॥
आश्चर्यभूतः सुगतान घोषः काङ्क्षां च शोकं च जहाति प्राणिनाम्।
क्षीणास्रवस्यो[1] मम यश्च शोको विगतोऽस्ति[2] सर्वं श्रुणियान घोषम्[3] ॥२॥
दिवाविहारम् अनुचंक्रमन्तो वनषण्ड आराममथ वृक्षमूलम्।
गिरिकन्दरांश्चाप्युपसेवमानो अनुचिन्तयामी[4] इममेव चिन्ताम् ॥३॥
अहोऽस्मि परिवञ्चितु पापचित्तैस्तुल्येषु धर्मेषु अनास्रवेषु।
यन्नाम त्रैधातुकि अग्रधर्मं न देशयिष्यामि अनागतेऽध्वे ॥४॥
द्वात्रिंशतीलक्षण मह्य भ्रष्टा सुवर्णवर्णच्छविता च भ्रष्टा।
बला विमोक्षाश्चिमि सर्वि रिञ्चिता तुल्येषु धर्मेषु अहोऽस्मि मूढः ॥५॥
अनुव्यञ्जना[5] ये च महामुनीनामशीतिपूर्णाः प्रवरा विशिष्टाः।
अष्टादशावेणिक ये च धर्मास्ते चापि भ्रष्टा अहु वञ्चितोऽस्मि ॥६॥
दृष्ट्वा च त्वां लोकहितानुकम्पी दिवाविहारं परिगम्य चैकः।
हा वञ्चितोऽस्मीति विचिन्तयामि असङ्गज्ञानातु अचिन्तियातः ॥७॥
रात्रिन्दिवानि क्षपयामि नाथ भूयिष्ठ सो एव विचिन्तयन्तः।
पृच्छामि तावद् भगवन्तमेव भ्रष्टोऽहमस्मीत्यथ वा न वेति ॥८॥
एवं च मे चिन्त्ययतो जिनेन्द्र गच्छन्ति रात्रिन्दिव नित्यकालम्।
दृष्ट्वा च अन्यान् बहु बोधिसत्त्वान् संवर्णिताँल्लोकविनायकेन ।९॥
श्रुत्वा च सोऽहं इमु बुद्धधर्मं सन्धाय एतत् किल भाषितं ति।
अतर्किकं सूक्ष्ममनास्रवञ्च ज्ञानं प्रणेती[6] जिन बोधिमण्डे ॥१०॥
दृष्टीविलग्नो ह्यहमासि पूर्वं परिव्राजकस्तीर्थिकसंमतश्च।
ततो ममा[7] आशयु ज्ञात्व नाथो दृष्टीविमोक्षाय ब्रवीति निर्वृतिम् ॥११॥

---

1 B ०स्य　　2 B. ०तो मि

3 Tib. 26b, l.2: ཟག་པ་ཟད་པ་བདག་གི་མྱ་ངན་ཀུང་། གསུང་ཐོས་པས་ནི་ཐམས་ཅད་བསལ་བར་གྱུར ॥

4 B. ०मि　　5 B. व्यञ्जना

6 B. ०ति　　7 B. मम

विमुच्यता दृष्टिकृतानि सर्वशः शून्यांश्च धर्मानहु स्पर्शयित्वा।
ततो विजानाम्यहु निर्वृतोऽस्मि न चापि निर्वाणमिदं प्रवुच्यति[1] ॥१२॥
यदा तु बुद्धो भवतेऽग्रसत्त्वः पुरस्कृतो नरमरुयक्षराक्षसैः।
द्वात्रिंशतीलक्षणरूपधारी अशेषतो निर्वृतु भोति तत्र ॥१३॥
व्यपनीत सर्वाणि मि मन्यितानि श्रुत्वा च घोषं अहमद्य निर्वृतः।
यदापि व्याकुर्वसि अग्रबोधौ पुरतो हि लोकस्य सदेवकस्य ॥१४॥
बलवच्च आसीन्मम छम्भितत्वं प्रथमं गिरं श्रुत्व विनायकस्य।
मा हैव मारो स्र भवेद्विहेठको अभिनिर्मिनित्वा भुवि बुद्धवेषम् ॥१५॥
यदा तु हेतूहि च कारणैश्च दृष्टान्तकोटीनयुतैश्च दर्शिता।
सुपरिस्थिता सा वरबुद्धबोधिस्ततोऽस्मि निष्काङ्क्षु श्रुणित्व धर्मम् ॥१६॥
यदा च मे बुद्धसहस्रकोट्यः कीर्तेष्यती तान् परिनिर्वृतान् जिनान्।
यथा[2] च तैर्देशितु एष धर्म उपायकौशल्य प्रतिष्ठिहित्वा ॥१७॥
अनागताश्चो बहुबुद्ध लोके तिष्ठन्ति ये चो परमार्थदर्शिनः।
उपायकौशल्यशतैश्च धर्मं निदर्शयिष्यन्त्यथ देशयन्ति च ॥१८॥
तथा[3] च ते आत्मन यादृशी चरी अभिनिष्क्रमित्वा[4] प्रभृतीय संस्तुता।
बुद्धं च ते यादृशु धर्मचक्रं यथा च तेऽवस्थित धर्मदेशना ॥१९॥
ततश्च जानामि न एष मारो भूतां चरिं दर्शयि लोकनाथः।
न ह्यत्र माराण गतीहि[5] विद्यते ममैव चित्तं विचिकित्सप्राप्तम् ॥२०॥
यदा तु मधुरेण गभीरवल्गुना संहर्षितो बुद्धस्वरेण चाहम्।
तदा मि विध्वंसित सर्वसंशया विचिकित्स नष्टा च स्थितोऽस्मि ज्ञाने ॥२१॥
निःसंशयं भेष्यि तथागतोऽहं पुरस्कृतो लोकि सदेवकेऽस्मिन्।
संधाय वक्ष्ये इमु बुद्धबोधिं समादपेन्तो बहुबोधिसत्त्वान् ॥२२॥

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्। आरोचयामि ते शारिपुत्र प्रतिवेदयामि तेऽस्य सदेवकस्य लोकस्य पुरतः समारकस्य सब्रह्मकस्य सश्रमणब्राह्मणिकायाः प्रजायाः पुरतः। मया त्वं शारिपुत्र विंशतीनां बुद्धकोटीनयुत-

---

1 B. प्रबुध्यति
2 B. यदा
3 B. B. यदा
4 J. अभिनिष्क्रमातात्
5 B. गतीह

शतसहस्राणामन्तिके परिपाचितोऽनुत्तरायां सम्यक्संबोधौ। मम च त्वं शारिपुत्र दीर्घरात्रमनुशिक्षितोऽभूत्। स त्वं शारिपुत्र बोधिसत्त्वसंमन्त्रितेन बोधिसत्त्वरहस्येनेह मम प्रवचन उपपन्नः। स त्वं शारिपुत्र बोधिसत्त्वाधिष्ठानेन तत्पौर्वकं चर्याप्रणिधानं बोधिसत्त्वसंमन्त्रितं बोधिसत्त्वरहस्यं न समनुस्मरसि। निर्वृतोऽस्मीति मन्यसे। सोऽहं त्वां शारिपुत्र पूर्वचर्याप्रणिधानज्ञानानुबोधमनुस्मारयितुकाम इमं सद्धर्मपुण्डरीकं धर्मपर्यायं सूत्रान्तं महावैपुल्यं बोधिसत्त्वाववादं सर्वबुद्धपरिग्रहं श्रावकाणां संप्रकाशयामि।

अपि खलु पुनः शारिपुत्र भविष्यसि त्वमनागतेऽध्वन्यप्रमेयैः कल्पैरचिन्त्यैरप्रमाणैर्बहूनां तथागतकोटीनयुतशतसहस्राणां सद्धर्मं धारयित्वा विविधां च पूजां कृत्वेमामेव बोधिसत्त्वचर्यां परिपूर्य पद्मप्रभो नाम तथागतोऽर्हन् सम्यक् संबुद्धो लोके भविष्यसि विद्याचरणसम्पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणाञ्च बुद्धो भगवान्।

तेन खलु पुनः शारिपुत्र समयेन तस्य भगवतः पद्मप्रभस्य तथागतस्य विरजं नाम बुद्धक्षेत्रं भविष्यति समं रमणीयं प्रासादिकं परमसुदर्शनीयं परिशुद्धं च स्फीतं च ऋद्धं च क्षेमं च सुभिक्षं च बहुजननारीगणाकीर्णं च मरुप्रकीर्णं च वैडूर्यमयं सुवर्णसूत्राष्टापदनिबद्धम्। तेषु चाष्टापदेषु रत्नवृक्षा भविष्यन्ति सप्तानां रत्नानां पुष्पफलैः सततसमितं समर्पिताः।

सोऽपि शारिपुत्र पद्मप्रभस्तथागतोऽर्हन् सम्यक्संबुद्धस्त्रीण्येव यानान्यारभ्य धर्मं देशयिष्यति। किं चापि शारिपुत्र स तथागतो न कल्पकषाय उत्पत्स्यते। अपितु प्रणिधानवशेन धर्मं देशयिष्यति।

महारत्नप्रतिमण्डितश्च नाम शारिपुत्र स कल्पो भविष्यति। तत् किं मन्यसे शारिपुत्र केन कारणेन स कल्पो महारत्नप्रतिमण्डित इत्युच्यते। रत्नानि शारिपुत्र बुद्धक्षेत्रे बोधिसत्त्वा उच्यन्ते[1]। ते तस्मिन् काले तस्यां विरजायां लोकधातौ बहवो बोधिसत्त्वा भविष्यन्त्यप्रमेयासंख्येयाचिन्त्यातुल्यामाप्या गणनां समतिक्रान्ता अन्यत्र तथागतगणनया। तेन कारणेन स कल्पो महारत्नप्रतिमण्डित इत्युच्यते।

तेन खलु पुनः शारिपुत्र समयेन बोधिसत्त्वास्तस्मिन् बुद्धक्षेत्रे यद्भूयसा

---

1 J. उच्यते

रत्नपद्मविक्रामिणो भविष्यन्ति। अनादिकर्मिकाश्च ते बोधिसत्त्वा भविष्यन्ति चिरचरितकुशलमूला बहुबुद्धशतसहस्रचीर्णब्रह्मचर्यास्तथागतपरिसंस्तुता बुद्धज्ञानाभियुक्ता महाभिज्ञापरिकर्मनिर्जाताः सर्वधर्मनयकुशला मार्दवाः स्मृतिमन्तः। भूयिष्ठेन शारिपुत्रैवंरूपाणां बोधिसत्त्वानां परिपूर्णं तद्बुद्धक्षेत्रं भविष्यति।

तस्य खलु पुनः शारिपुत्र पद्मप्रभस्य तथागतस्य द्वादशान्तरकल्पा आयुष्प्रमाणं भविष्यति स्थापयित्वा कुमारभूतत्वम्। तेषाञ्च सत्त्वानामष्टान्तरकल्पा आयुष्प्रमाणं भविष्यति। स च शारिपुत्र पद्मप्रभस्तथागतो द्वादशानामन्तरकल्पानामत्ययेन धृतिपरिपूर्णं नाम बोधिसत्त्वं महासत्त्वं व्याकृत्यानुत्तरायां सम्यक्संबोधौ परिनिर्वास्यति। अयं भिक्षवो धृतिपरिपूर्णो बोधिसत्त्वो महासत्त्वो ममान्तर[1]मनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते। पद्मवृषभविक्रामी नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोके भविष्यति विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानाञ्च मनुष्याणाञ्च बुद्धो भगवान्। तस्यापि शारिपुत्र पद्मवृषभविक्रामिणस्तथागतस्यैवंरूपमेव बुद्धक्षेत्रं भविष्यति।

तस्य खलु पुनः शारिपुत्र पद्मप्रभस्य तथागतस्य परिनिर्वृतस्य द्वात्रिंशदन्तरकल्पान् सद्धर्मः स्थास्यति। ततस्तस्य तस्मिन् सद्धर्मक्षीणे द्वात्रिंशदन्तरकल्पान् सद्धर्मप्रतिरूपकः स्थास्यति।

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत।

भविष्यसे शारिसुता तुहंपि अनागतेऽध्वानि जिनस्तथागतः।
पद्मप्रभो नाम समन्तचक्षुर्विनेष्यसे प्राणिसहस्रकोट्यः॥२३॥
बहुबुद्धकोटीषु करित्व सत्क्रियां चर्याबलं तत्र उपार्जयित्वा।
उत्पादयित्वा च दशो बलानि स्पृशिष्यसे उत्तममग्रबोधिम्॥२४॥
अचिन्तिये अपरिमितस्मि कल्पे प्रभूतरत्नस्तद कल्पु भेष्यति।
विरजा च नाम्ना तद लोकधातुः क्षेत्रं विशुद्धं द्विपदोत्तमस्य॥२५॥
वैडूर्यसंस्तीर्ण तथैव भूमिः सुवर्णसूत्रप्रतिमण्डिता च।
रत्नामयैर्वृक्षशतैरुपेता सुदर्शनीयैः फलपुष्पमण्डितैः॥२६॥

1 B. ममातन्तर॰, J. ममोत्तोर॰

स्मृतिमन्त तस्मिन् बहुबोधिसत्त्वाः चर्याभिनिर्हारसुकोविदाश्च ।
ये शिक्षिता बुद्धशतेषु चर्या ते तत्र क्षेत्रे उपपद्य सन्ति ॥२७॥
सो च्चेज्जिनः पश्चिमके समुच्छ्रये कुमारभूमीमतिनामयित्वा ।
जहित्व कामानभिनिष्क्रमित्वा स्पृशिष्यते उत्तममग्रबोधिम् ॥२८॥
सम द्वादशा अन्तरकल्प तस्य भविष्यते आयु तदा जिनस्य ।
मनुजानपी अन्तरकल्प[1] अष्ट आयुष्प्रमाणं तहि तेष भेष्यति ॥२९॥
परिनिर्वृतस्यापि जिनस्य तस्य द्वात्रिंशतीं अन्तरकल्पपूर्णाम् ।
सद्धर्म संस्थास्यति तस्मि काले हिताय लोकस्य सदेवकस्य ॥३०॥
सद्धर्मि क्षीणे प्रतिरूपकोऽस्य द्वात्रिंशती अन्तरकल्प स्थास्यति ।
शरीरवैस्तारिक तस्य तायिनः सुसत्कृतो नरमरुतैश्च नित्यम् ॥३१॥
एतादृशः सो भगवान् भविष्यति प्रहृष्ट त्वं शारिसुता भवस्व ।
त्वमेव सो तादृशको भविष्यसि अनाभिभूतो द्विपदानमुत्तमः ॥३२॥

अथ खलु ताश्चतस्रः पर्षदो भिक्षुभिक्षुण्युपासकोपासिकादेवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्या आयुष्मतः शारिपुत्रस्येदं व्याकरणमनुत्तरायां सम्यक्संबोधौ भगवतोऽन्तिकात् संमुखं श्रुत्वा तुष्टा उदग्रा आत्तमनसः प्रमुदिताः प्रीतिसौमनस्यजाताः स्वकस्वकैश्चीवरैर्भगवन्तमभिच्छादमामासुः । शक्रश्च देवानामिन्द्रो ब्रह्मा च सहांपतिरन्याश्च देवपुत्रशतसहस्रकोट्यो भगवन्तं दिव्यैर्वस्त्रैरभिच्छादयामासुः । दिव्यैश्च मान्दारवैर्महामान्दारवैश्च पुष्पैरभ्यवकिरन्ति स्म । दिव्यानि च वस्त्राण्युपर्यन्तरीक्षे भ्रामयन्ति स्म । दिव्यानि च तूर्यशतसहस्राणि दुन्दुभयश्चोपर्यन्तरीक्षे पराहनन्ति स्म । महन्तं च पुष्पवर्षमभिप्रवर्षयित्वैवं च वाचं भाषन्ते स्म । पूर्वं भगवता वाराणस्यामृषिपतने मृगदावे धर्मचक्रं प्रवर्तितमिदं पुनर्भगवताद्यानुत्तरं द्वितीयं धर्मचक्रं प्रवर्तितम् । ते च देवपुत्रास्तस्यां वेलायामिमा गाथा अभाषन्त ।

धर्मचक्रं प्रवर्तेसि लोके अप्रतिपुद्गल ।
वाराणस्यां महावीर स्कन्धानामुदयं व्ययम् ॥३३॥
प्रथमं प्रवर्तितं तत्र द्वितीयमिह नायक ।
दुःश्रद्दधेय यस्तेषां देशितोऽद्य विनायक ॥३४॥

---

1 B. मनुजानमभ्यन्तर०

बहुधर्मः श्रुतोऽस्माभिर्लोकनाथस्य संमुखम् ।
न चायमीदृशो धर्मः श्रुतपूर्वः कदाचन ॥३५॥
अनुमोदाम महावीर संधाभाष्यं महर्षिणः[1] ।
यथायों व्याकृतो ह्येष शारिपुत्रो विशारदः ॥३६॥
वयमप्येदृशाः स्यामो बुद्धा लोके अनुत्तराः ।
संधाभाष्येण देशेन्तो बुद्धबोधिमनुत्तराम् ॥३७॥
यच्छ्रुतं[2] कृतमस्माभिरस्मिँल्लोके परत्र वा
आरागितश्च यद्बुद्धः[3] प्रार्थना भोतु बोधये ॥३८॥

अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्। निष्काङ्क्षोऽस्मि भगवन् विगतकथंकथो भगवतोऽन्तिकात् संमुखमिदमात्मनो व्याकरणं श्रुत्वानुत्तरायां सम्यक्संबोधौ। यानि चेमानि भगवन् द्वादश वशीभूतशतानि भगवता पूर्वं शैक्षभूमौ स्थापितान्येवमववदितान्येवमनुशिष्टान्यभूवन्। एतत्पर्यवसानो मे भिक्षवो धर्मविनयो यदिदं जातिजराव्याधिमरणशोकसमतिक्रमो निर्वाणसमवसरणः। इमे च भगवन् द्वे भिक्षुसहस्रे शैक्षाशैक्षाणां भगवतः श्रावकाणां सर्वेषामात्मदृष्टिभवदृष्टिविभव[4]दृष्टिसर्वदृष्टिविवर्जितानां निर्वाणभूमिस्थिताः स्म इत्यात्मनः[5] संजानतां ते भगवतोऽ[6]न्तिकादिममेवंरूपमश्रुतपूर्वं धर्मं श्रुत्वा कथंकथामापन्नाः। तत् साधु भगवान् भाषतामेषां भिक्षूणां कौकृत्यविनोदनार्थं यथा भगवन्नेताश्चतस्रः पर्षदो निष्काङ्क्षा निर्विचिकित्सा भवेयुः।

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्। ननु ते मया शारिपुत्र पूर्वमेवाख्यातं यथा नानाभिनिर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौशल्यैर्नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा तथागतोऽर्हन् सम्यक्संबुद्धो धर्मं देशयति। इमामेवानुत्तरां सम्यक्संबोधिमारभ्य सर्वधर्मदेशनाभिर्बोधिसत्त्वयानमेव समादापयति। अपि तु खलु पुनः शारिपुत्रौपम्यं ते करिष्यामि अस्यैवार्थस्य भूयस्या मात्रया सन्दर्शनार्थम्। तत् कस्य हेतोः। उपमयेहैकत्या विज्ञपुरुषा भाषितस्यार्थमाजानन्ति।

---

1 B. महर्षिणाम् 2 J. यच्छुभं 3 J. संबुद्धः
4 B. ०त्मदृष्टिविभव० 5 B. ०त्मान 6 B. ०तां भगवतो०

तद् यथापि नाम शारिपुत्रेह स्यात् कस्मिंश्चिदेव ग्रामे वा नगरे वा निगमे वा जनपदे वा जनपदप्रदेशे वा राष्ट्रे वा राजधान्यां वा गृहपतिर्जीर्णो वृद्धो महल्लकोऽभ्यतीतवयोऽनुप्राप्त आढ्यो महाधनो महाभोगः। महच्चास्य निवेशनं भवेदुच्छ्रितं च विस्तीर्णं च चिरकृतं च जीर्णं च द्वयोर्वा त्रयाणां वा चतुर्णां वा पञ्चानां वा प्राणिशतानामावासः। एकद्वारं च तन्निवेशनं भवेत्। तृणसंछन्नं च भवेत्। विगडितप्रासादं[1] च भवेत्। पूतिस्तम्भ-मूलं च भवेत। संशीर्णकुड्यकटलेपनं च भवेत्। तच्च सहसैव महताग्नि-स्कन्धेन सर्वपार्श्वेषु सर्वावन्तं निवेशनं प्रदीप्तं भवेत्। तस्य च पुरुषस्य बहवः कुमारकाः स्युः पञ्च वा दश विंशतिर्वा। स च पुरुषस्तस्मान्निवेश-नाद् बहिर्निर्गतः स्यात्।

अथ खलु शारिपुत्र स पुरुषस्तं स्वकं निवेशनं महताग्निस्कन्धेन समन्तात् संप्रज्वलितं दृष्ट्वा भीतस्त्रस्त उद्विग्नचित्तो भवेदेवं चानुविचिन्तयेत् प्रति-बलोऽहमनेन महताग्निस्कन्धेनासंस्पृष्टोऽपरिदग्धः क्षिप्रमेव स्वस्तिनास्माद् गृहादादीप्ताद् द्वारेण[2] निर्गन्तुं निर्धावितुम्। अपि तु य इमे ममैव पुत्रा बालकाः कुमारका अस्मिन्नेव निवेशन आदीप्ते तैस्तैः क्रीडनकैः क्रीडन्ति रमन्ति परिचारयन्ति। इमं चागारमादीप्तं न जानन्ति न बुध्यन्ते न विदन्ति न चेतयन्ति नोद्वेगमापद्यन्ते। संतप्यमाना अप्यनेन महताग्निस्कन्धेन महता च दुःखस्कन्धेन स्पृष्टाः समाना न दुःखं मनसि कुर्वन्ति। नापि निर्गमनमनसि-कारमुत्पादयन्ति।

स च शारिपुत्र पुरुषो बलवान् भवेद् बाहुबलिकः। स एवमनुविचिन्तयेदह-मस्मि बलवान् बाहुबलिकश्च। यन्न्वहं सर्वानिमान् कुमारकानेकपिण्डयित्वोत्-सङ्गेनादायास्माद् गृहान्निर्गमयेयम्। स पुनरेवमनुविचिन्तयेत्। इदं खलु निवेशनमेकप्रवेशं संवृतद्वारमेव कुमारकाश्चपलाश्चञ्चला बालजातीयाश्च मा हैव परिभ्रमेयुः। तेऽनेन महताग्निस्कन्धेनानयव्यसनमापद्येरन्। यन्नूनमह-मेतान् संचोदयेयमिति प्रतिसंख्याय तान् कुमारकानामन्त्रयते स्म। आगच्छत भवन्तः कुमारका निर्गच्छत। आदीप्तमिदं गृहं महताग्निस्कन्धेन। मा है-वात्रैव सर्वेऽनेन महताग्निस्कन्धेन धक्ष्यथानयव्यसनमापत्स्यथ। अथ खलु

---

1 J. विगड्तिप्रसादं 2 J. दूरेण

ते कुमारका एवं तस्य हितकामस्य पुरुषस्य तद्भाषितं नावबुध्यन्ते नोद्विजन्ति नोत्त्रसन्ति न सन्त्रसन्ति न सन्त्रासमापद्यन्ते न विचिन्तयन्ति न निर्धावन्ति नापि जानन्ति न विजानन्ति किमेतदादीप्तं नामेति। अन्यत्र तेन तेनैव धावन्ति विधावन्ति पुनः पुनश्च तं पितरमवलोकयन्ति। तत् कस्य हेतोः। यथापीदं बालभावत्वात्।

अथ खलु स पुरुष एवमनुविचिन्तयेत्। आदीप्तमिदं निवेशनं महताग्निस्कन्धेन संप्रदीप्तं मा हैवाहं चेमे च कुमारका इहैवानेन महताग्निस्कन्धेनानयव्यसनमापत्स्यामहे। *यन्न्वहमुपायकौशल्येनेमान् कुमारकान् अस्माद् गृहात् निष्कामयेयम्। स च पुरुषस्तेषां कुमारकाणामाशयज्ञो भवेदधिमुक्तिं च विजानीयात्। तेषां च कुमारकाणामनेकविधान्यनेकानि† क्रीडनकानि भवेयुर्विविधानि च रमणीयकानीष्टानि कान्तानि प्रियाणि मन-आपानि तानि च दुर्लभानि भवेयुः।

अथ खलु स पुरुषस्तेषां कुमारकाणामाशयं‡ जानंस्तान् कुमारकानेतदवोचत्। यानि तानि कुमारका युष्माकं क्रीडनकानि रमणीयकान्याश्चर्याद्भुतानि येषामलाभात् संतप्यथ नानावर्णानि$ बहुप्रकाराणि। तद् यथा गोरथकान्यजरथकानि मृगरथकानि। यानि भवतामिष्टानि कान्तानि प्रियाणि मन-आपानि तानि च मया सर्वाणि बहिर्निवेशनद्वारे स्थापितानि युष्माकं क्रीडनहेतोः। आगच्छन्तु भवन्तो निर्धावन्त्वस्मान्निवेशनात्¶। अहं वो यस्य यस्य येनार्थो येन प्रयोजनं भविष्यति तस्मै तस्मै तत् प्रदास्यामि। आगच्छत शीघ्रं तेषां कारणं निर्धावत। अथ खलु ते कुमारकास्तेषां क्रीडनकानां§ रमणीयकानामर्थाय यथे-

---

* M. yanūnaṃ ahaṃ upāyakauśalyena ime kumārakā ito niṣkāsayeyā so ...

† M. āvividhāni krīḍāpanākāni bhaveyuḥ vividhāni ca dhāraṇīyakāni bhaveyuḥ

‡ M. [ku]mārakānāṃ āśaya saṃjānat...te kumārakā evaṃ vadeyāt yāni tāni bho ku ...

$ M. nānāvarṇāni bahupra [kā]rāṇi tad yathā gorathamṛgarathakā yuṣmākam... ...

¶ M. ... yāth ito niveśanāto[ba]hi yuṣmākaṃ yasya yena kāryaṃ bhabiṣyati ।

§ M. [krīḍāpanakā]nāṃ ra...īyakānāṃ yathepsitānāṃ yathāsaṃkalpitānāṃ iṣṭānāṃ k[ā]ntānāṃ priyā[ṇāṃ]

प्सितानां यथासंकल्पितानामिष्टानां कान्तानां प्रियाणां मन-आपानां नामधेयानि श्रुत्वा तस्मादादीप्तादागारात[1] क्षिप्रमेवारब्धवीर्या बलवता जवेनान्योन्यम-* प्रतीक्षमाणाः कः प्रथमं कः प्रथमतरमित्यन्योन्यं संघट्टितकायास्तस्मादादीप्ता-दगारात् क्षिप्रमेव निर्धाविताः।

अथ स पुरुषः क्षेमस्वस्तिना तान् कुमारकान् निर्गतान्† दृष्ट्वाभयप्राप्तानिति विदित्वाकाशे ग्रामचत्वर उपविष्टः प्रीतिप्रामोद्यजातो निरुपादानो विगत-नीवरणो[2]ऽभयप्राप्तो भवेत्। अथ खलु ते कुमारका येन स पिता तेनोपसंक्राम-न्नुपसंक्रम्यैवं वदेयुः। देहि‡ नस्तात तानि विविधानि क्रीडनकानि रमणी-यानि। तद् यथा गोरथकान्यजरथकानि मृगरथकानि। अथ खलु शारिपुत्र स पुरुषस्तेषां स्वकानां पुत्राणां वातजवसम्पन्नान् गोरथकानेवानुप्रयच्छेत् सप्तरत्न-मयान् सवेदिकान् $सकिङ्किणीजालाभिप्रलम्बितानुच्चान् प्रगृहीतानाश्चर्याद्भुत-रत्नालंकृतान् रत्नदामकृतशोभान् पुष्पमाल्यालङ्कृतांस्तूलिकागोणिकास्तरणान् दूष्यपटप्रत्यास्तीर्णानुभयतो लोहितोपधानान् श्वेतैः¶ प्रपाण्डरैः शीघ्रजवैर्गोणै-र्योजितान् बहुपुरुषपरिगृहीतान् सवैजयन्तान् गोरथकानेव वातबलजव-सम्पन्नानेकवर्णानेकविधानेकैकस्य§ दारकस्य दद्यात्। तत् कस्य हेतोः। तथा हि शारिपुत्र स पुरुष आढ्यश्च भवेन्महाधनश्च प्रभूतकोष्ठागारश्च। स एवं मन्येत्[3]। अलं म एषां कुमारकाणामन्यैर्यानैर्दत्तैरिति। **तत् कस्य हेतोः। सर्व एवैते कुमारका ममैव पुत्राः सर्वे च मे प्रिया मन-आपाः। संविद्यन्ते च

---

* M. ... [ja]vena anyam...apratipālavanta kaḥ prathamakāḥ prathamataraka anonyasamgaṭṭitakāya ta......

† M. ...ntā dṛṣṭvā .....[ca]tvare upaviṣṭā [vid]itvā prītis[ukhi]-to bha[v]eyām nirupādāno vigatanīvaraṇ...

‡ M. ... [asam]ākam bhāmā [?] de[h]i as[m]ā[ka]m tāta tāni vividhāni krīḍāpanakāni......

$ M. ...kiṃkiṇīkāmuktā......

¶ M. ... [śve]tebhiś ca paṇḍurebhi...

§ M. ... ya ceda eka...me...ya ekamekasya...ārakasya dadyā...

** M. ... evaṃ paśy ... teṣāṃ kumārak[ā]ṇāṃ khuḍak[e]bhir yānebhi dīrṇebhi tat kasya heto sarvbe ca......

---

1 J ०दगारात 2 B ०निवरण० 3 B पश्येत्; Tib. སེམས་ཏེ

म इमान्येवंरूपाणि महायानानि *समं च मयैते कुमारकाः सर्वे चिन्तयितव्या न विषमम्। अहमपि बहुकोशकोष्ठागारः सर्वसत्त्वानामप्यहमिमान्येवंरूपाणि महायानानि दद्याम्†। किमङ्ग पुनः स्वकानां पुत्राणाम्। ते च दारकास्तस्मिन् समये तेषु महायानेष्वभिरूढाश्चर्याद्भुतप्राप्ता भवेयुः। तत् किं मन्यसे शारिपुत्र मा हैव तस्य पुरुषस्य‡ मृषावादः स्याद् येन तेषां दारकाणां पूर्वं त्रीणि यानान्युपदर्शयित्वा पश्चात् सर्वेषां महायानान्येव दत्तान्युदारयानान्येव दत्तानि।

शारिपुत्र आह। न ह्येतद् भगवन्न ह्येतत् सुगत। अनेनैव तावद् भगवन् कारणेन स पुरुषो§ न मृषावादी भवेद् यत्तेन पुरुषेणोपायकौशल्येन ते दारकास्तस्मादादीप्ताद् गृहान्निष्कासिता जीवितेन चाभिच्छादिताः। तत् कस्य हेतोः। आत्मभावप्रतिलम्भेनैव भगवन् सर्वक्रीडनकानि ¶लब्धानि भवन्ति। यद्यपि तावद् भगवन् स पुरुषस्तेषां कुमारकाणामेकरथमपि§ न दद्यात् तथापि तावद् भगवन् स पुरुषो न मृषावादी भवेत्। तत् कस्य हेतोः। तथा हि भगवंस्तेन पुरुषेण पूर्वमेवैवमनुविचिन्तितमुपायकौशल्येनाहमिमान् कुमारकांस्तस्मान्महतो दुःखस्कन्धात्** परिमोचयिष्यामीति। अनेनापि भगवन् पर्यायेण तस्य पुरुषस्य न मृषावादो भवेत्। कः पुनर्वादो यत्तेन पुरुषेण प्रभूतकोशकोष्ठागारमस्तीति कृत्वा पुत्रप्रियतामेव मन्यमानेन श्लाघमानेनैकवर्णान्येकयानानि दत्तानि यदुत महायानानि। नास्ति भगवंस्तस्य पुरुषस्य मृषावादः।

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्। साधु साधु शारिपुत्र।

* M. ... [ma]hāyānāni ]sa]maṃ ca mayāimeṣāṃ kumārakānāṃ sarvbeṣāṃ cintayitavyaṃ na viṣaṃ ah[aṃ]...

† M. ... yānā...dy[āṃ] kiṃ puna...[sva]kānāṃ putrāṇāṃ te ca dārakā tasmiṃ samaye [tā]ni mahā......

‡ M. ... [tas]ya puruṣasya kiṃbhiḥ mṛṣāvādaṃ bhavati [ye]na teṣāṃ dārakāṇāṃ mahāy... ...

§ M. ... puruṣa amṛṣavādi bhava...yena te kumā[ra]kā ādīptāto ākārāt[o] niṣ .. ...

¶ M. ... paṇīyakāni labdh[ā]ni bhavanti kaḥ puna[p]r[ā]ṇāya(?) ya amina puruṣeṇa upāyak... ...

§ M. ṅāṃ ekarathakāmpi na dadyāt tathāpi tāvad Bhaga[v]ā[ṃ] satpuruṣ..amṛṣāvādirbhaveyata... ...

** M. [ta]to mahantāto duḥkhaskandhāto parimocayiśyāmīti imena bhagavāṃ paryāyena... ...

एवमेतच्छारिपुत्र। एवमेतद् यथा वदसि। एवमेव शारिपुत्र तथागतोऽर्हन् सम्यक्संबुद्धः सर्वभयविनिवृत्तः सर्वोपद्रवोपायासोपसर्गदुःखदौर्मनस्याविद्यान्धकारतमस्तिमिरपटलपर्यवनाहेभ्यः सर्वेण सर्वं सर्वथा विप्रमुक्तः। तथागतो ज्ञानबलवैशारद्यावेणिकबुद्धधर्मसमन्वागत ऋद्धिबलेनातिबलवाँल्लोकपिता महोपायकौशल्यज्ञानपरमपारमिताप्राप्तो महाकारुणिकोऽपरिखिन्नमानसो हितैष्यनुकम्पकः। स त्रैधातुके महता दुःखदौर्मनस्यस्कन्धेनादीप्तजीर्णपटलशरणनिवेशनसदृश उत्पद्यते सत्त्वानां जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासाविद्यान्धकारतमस्तिमिरपटलपर्यवनाहप्रतिष्ठानां* रागद्वेषमोहपरिमोचनहेतोरनुत्तरायां सम्यक्संबोधौ समादापनहेतोः। स उत्पन्नः समानः पश्यति सत्त्वान् दह्यतः पच्यमानांस्तप्यमानान्† परितप्यमानान् जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैः परिभोगानिमित्तञ्च कामहेतुनिदानं चानेकविधानि दुःखानि प्रत्यनुभवन्ति। ‡दृष्टधार्मिकं च पर्येष्टिनिदानं परिग्रहनिदानं च साम्परायिकं नरकतिर्यग्योनियमलोकेष्वनेकविधानि दुःखानि प्रत्यनुभविष्यन्ति। देवमनुष्यदारिद्र्यमनिष्टसंयोगमिष्टविनाभाविकानि§ च दुःखानि प्रत्यनुभवन्ति। तत्रैव च दुःखस्कन्धे परिवर्तमानाः क्रीडन्ति रमन्ते परिचारयन्ति नोत्त्रसन्ति न सन्त्रसन्ति न सन्त्रासमापद्यन्ते न बुध्यन्ते न चेतयन्ति ¶नोद्विजन्ति न निःसरणं पर्येषन्ते तत्रैव चादीप्तागारसदृशे त्रैधातुकेऽभिरमन्ति तेन तेनैव विधावन्ति। तेन च महता दुःखस्कन्धेनाभ्याहता न दुःखमनसिकारसंज्ञामुत्पादयन्ति।

तत्र$ शारिपुत्र तथागत एवं पश्यति। अहं खल्वेषां सत्त्वानां पिता। मया ह्येते सत्त्वा अस्मादेवंरूपान्महतो दुःखस्कन्धात् परिमोचयितव्या मया चैषां

* M. ... [avi]dyāndhāk... ...ra... ... [dve]ṣamohāgni... ...

† M. ...tapyantā paritapya saṃtapyantā jarāvyādhiśoka parideva... ...

‡ M. ...vanti dṛṣṭadharmikaṃ ca paryeṣṭinidā...[pa]rigraha-nidānaṃ saṃparāyikam ca [na]ra[ka]... ...

§ M. ... [i]ṣṭavinābhāvāni ca duḥkhāni pratyanu[bha]vant[i] tatra ca mahante duḥkhaskandhe pārivarttamā[nā]... ...

¶ M. ... ntanti ha udvījanti na nīsaranaṃ paryeśa[nt]i tatra caivo...ādīptākārasadṛśe traidhātuke a]bhiram... ...

$ M. tatra Sāriputra tathāgata evaṃ paśyati ahaṃ hi imeṣāṃ satvānām pitā. Maya ca... ...

सत्त्वानामप्रमेयमचिन्त्यं* बुद्धज्ञानसुखं दातव्यं येनैते सत्त्वाः क्रीडिष्यन्ति रमिष्यन्ति परिचारयिष्यन्ति विक्रीडितानि च करिष्यन्ति।

तत्र शारिपुत्र तथागत एवं पश्यति। सचेदहं ज्ञानबलोऽस्मीति कृत्वर्द्धिबलोऽस्मीति कृत्वानुपायेनैषां† सत्त्वानां तथागतज्ञानबलवैशारद्यानि संश्रावयेयं नैते सत्त्वा एभिर्धर्मैर्निर्यायेयुः। तत् कस्य हेतोः। अध्यवसिता ह्यमी सत्त्वाः पञ्चसु कामगुणेषु त्रैधातुकरत्यामपरिमुक्ता जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासेभ्यो ‡दह्यन्ते पच्यन्ते तप्यन्ते परितप्यन्ते। अनिर्धावितास्त्रैधातुकादादीप्तजीर्णपटलशरणनिवेशनसदृशात् कथमेते बुद्धज्ञानं परिभोक्ष्यन्ते।

तत्र शारिपुत्र तथागतो यद् यथापि नाम स पुरुषो बाहुबलिकः स्थापयित्वा बाहुबलमुपायकौशल्येन§ तान् कुमारकांस्तस्मादादीप्तादागारा[1]न्निष्कासयेन्निष्कासयित्वा च तेषां पश्चादुदाराणि महायानानि दद्यात्। एवमेव शारिपुत्र तथागतोऽप्यर्हन् सम्यक्संबुद्धस्तथागतज्ञानबलवैशारद्यसमन्वागतः¶ स्थापयित्वा तथागतज्ञानबलवैशारद्यमुपायकौशल्यज्ञानेनादीप्तजीर्णपटलशरणनिवेशनसदृशात् त्रैधातुकात् सत्त्वानां निष्कासनहेतोस्त्रीणि $यानान्युपदर्शयति यदुत श्रावकयानं प्रत्येकबुद्धयानं बोधिसत्त्वयानमिति। त्रिभिश्च यानैः सत्त्वाँल्लोभयत्येवं चैषां वदति। मा भवन्तोऽस्मिन्नादीप्तागारसदृशे त्रैधातुकेऽभिरमध्वं **हीनेषु रूपशब्दगन्धरसस्पर्शेषु। अत्र हि यूयं त्रैधातुकेऽभिरताः पञ्चकामगुणसहगतया तृष्णया दह्यथ तप्यथ परितप्यथ। निर्धावध्वमस्मात् त्रैधातुकात् त्रीणि यानान्यनुप्राप्स्यथ यदिदं श्रावकयानं प्रत्येकबुद्धयानं†† बोधिसत्त्वयानमिति। अहं वोऽत्र स्थाने

---

* M. ... acintikaṃ buddhajñānasukha[ṃ] dātavya[ṃ] yena ete satvā rāmīyu krīḍeyu vikrīḍanīyāni... ...

† M. ... [u]pāyenā ime satvān tathāgata-jñānadarśana-bala-vaiśāradyaṃ śaṃśrāvayeyaṃ na ete satvā... ...

‡ M. ... sya-u[p]āyāsebhir dahyanti paridahyanti anirdāyitā traidhātukāto ādiptāśaraṇā-sa-ṛ... ...

§ M. ... sarvbaṃ bala-vīrya-upāyā-kauśalyena te k[u]māraka tata ādīptato ākārāto niṣkrā... ...

¶ M. ...bala-vaiśāradya-samanyāgato sthāpayitvā tathāgata-balavaiśā... ...

$ M. ... trīṇi yānāni deśay...yāna pratyeka... ...

** M. ... [abhira]matha hī[n]...gandharasa... ...

†† M. ... [pra]tyeka[buddha... ...

---

1 J ०दगारा०

प्रतिभूरहं वो दास्याम्येतानि त्रीणि यानान्यभियुज्यध्वे त्रैधातुकान्निःसरणहेतोः। एवं चैतांल्लोभयामि। एतानि भोः सत्त्वा यान्यार्याणि चार्यप्रशस्तानि च महारमणीयकसमन्वागतानि चाकृपणमेतैर्भवन्तः क्रीडिष्यथ रमिष्यथ परिचारयिष्यथ। इन्द्रियबलबोध्यङ्गध्यानविमोक्षसमाधिसमापत्तिभिश्च महतीं रतिं प्रत्यनुभविष्यथ। महता च सुखसौमनस्येन समन्वागता भविष्यथ।

तत्र शारिपुत्र ये सत्त्वाः पण्डितजातीया भवन्ति ते तथागतस्य लोकपितुरभिश्रद्दधन्ति। अभिश्रद्दधित्वा च तथागतशासनेऽभियुज्यन्त उद्योगमापद्यन्ते। तत्र केचित् सत्त्वा परघोषश्रवानुगमनमाकाङ्क्षमाणा आत्मपरिनिर्वाणहेतोश्चतुरार्यसत्यानुबोधाय तथागतशासनेऽभियुज्यन्ते। त उच्यन्ते श्रावकयानमाकाङ्क्षमाणास्त्रैधातुकान्निर्धावन्ति तद् यथापि नाम तस्मादादीप्तादगारादन्यतरे[1] दारका मृगरथमाकाङ्क्षमाणा निर्धाविताः। अन्ये सत्त्वा अनाचार्यकं ज्ञानं दमशमथमाकाङ्क्षमाणा आत्मपरिनिर्वाणहेतोर्हेतुप्रत्ययानुबोधाय तथागतशासनेऽभियुज्यन्ते। त उच्यन्ते प्रत्येकबुद्धयानमाकाङ्क्षमाणास्त्रैधातुकान्निर्धावन्ति तद् यथापि नाम तस्मादादीप्तादगारादन्यतरे[1] दारका अजरथमाङ्क्षमाणा निर्धाविताः। अपरे पुनः सत्त्वाः सर्वज्ञज्ञानं[2] बुद्धज्ञानं स्वयम्भुज्ञानमनाचार्यकं ज्ञानमाकाङ्माणा बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च सर्वसत्त्वपरिनिर्वाणहेतोस्तथागतज्ञानबलवैशारद्यानुबोधाय तथागतशासनेऽभियुज्यन्ते। त उच्यन्ते महायानमाकाङ्क्षमाणास्त्रैधातुकान्निर्धावन्ति। तेन कारणेनोच्यन्ते बोधिसत्त्वा महासत्त्वा इति। तद् यथापि नाम तस्मादादीप्तादगारादन्यतरे दारका गोरथमाकाङ्क्षमाणा निर्धाविताः।

तद् यथापि नाम शारिपुत्र स पुरुषस्तान् कुमारकांस्तस्मादादीप्तादगारान्निर्धावितान्[3] दृष्ट्वा क्षेमस्वस्तिभ्यां परिमुक्तानभयप्राप्तानिति विदित्वात्मानं च महाधनं विदित्वा तेषां दारकाणामेकमेव यानमुदारमनुप्रयच्छेत् एवमेव शारिपुत्र तथागतोऽप्यर्हन् सम्यक्संबुद्धो यदा पश्यत्यनेकाः सत्त्वकोटीस्त्रैधातुकात् परिमुक्ता दुःखभयभैरवोपद्रवपरिमुक्तास्तथागतशासनद्वारेण[4] निर्धाविताः परि-

---

1 J तस्मादादीप्तागाराद॰

2 J पुनः सर्वज्ञ॰

3 J ॰दीप्तागारान्नि॰

4 B ॰शासने द्वारेण

मुक्ताः सर्वभयोपद्रवकान्तारेभ्यो निर्वृतिसुखप्राप्ताः। तानेतान् शारिपुत्र तस्मिन् समये तथागतोऽर्हन् सम्यक्संबुद्धः प्रभूतो महाज्ञानबलवैशारद्यकोश इति विदित्वा सर्वे चैते ममैव पुत्रा इति ज्ञात्वा बुद्धयानेनैव तान् सत्त्वान् परिनिर्वापयति। न च कस्यचित् सत्त्वस्य प्रत्यात्मिकं परिनिर्वाणं वदति। सर्वांश्च तान् सत्त्वांस्तथागतपरिनिर्वाणेन महापरिनिर्वाणेन परिनिर्वापयति। ये चापि ते शारिपुत्र सत्त्वास्त्रैधातुकात् परिमुक्ता भवन्ति तेषां तथागतो ध्यान-विमोक्षसमाधिसमापत्तीरार्याणि परमसुखानि क्रीडनकानि रमणीयकानि ददाति सर्वाण्येतान्येकवर्णानि। तद् यथापि नाम शारिपुत्र तस्य पुरुषस्य न मृषावादो भवेद् येन त्रीणि यानान्युपदर्शयित्वा तेषां कुमारकाणामेकमेव महायानं सर्वेषां दत्तं सप्तरत्नमयं सर्वालङ्कारविभूषितमेकवर्णमेवोदारयानमेव सर्वेषामग्र-यानमेव दत्तं भवेत् एवमेव शारिपुत्र तथागतोऽप्यर्हन् सम्यक्संबुद्धो न मृषा-वादी[3] भवति येन पूर्वमुपायकौशल्येन त्रीणि यानान्युपदर्शयित्वा पश्चान्महा-यानेनैव सत्त्वान् परिनिर्वापयति। तत् कस्य हेतोः। तथागतो हि शारिपुत्र प्रभूतज्ञानबलवैशारद्यकोशकोष्ठागारसमन्वागतः प्रतिबलः सर्वसत्त्वानां सर्वज्ञ-ज्ञानसहगतं धर्ममुपदर्शयितुम्। अनेनापि शारिपुत्र पर्यायेणैवं वेदितव्यम्। यथोपायकौशल्यज्ञानाभिनिर्हारैस्तथागत एकमेव महायानं देशयति।

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत।

यथा हि पुरुषस्य भवेदगारं जीर्णं महन्तं च सुदुर्बलं च।
विशीर्णप्रासादु तथा भवेत स्तम्भाश्च मूलेषु भूवेषु पूतिकाः॥३९
गवाक्षहर्म्या गडितैकदेशा विशीर्णं कुड्यं कटलेपनश्च।
जीर्णु प्रवृद्धोद्धृतवेदिकं[1] च तृणच्छदं सर्वत ओपतन्तम्॥४०
शतान पञ्चान अनूनकानां आवासु सो तत्र भवेत प्राणिनाम्।
बहूनि चा[2] निष्कुटसंकटानि उच्चारपूर्णानि जुगुप्सितानि॥४१
गोपानसी विगडित तत्र सर्वा कुड्याश्च भित्तीश्च तथैव स्रस्ताः।
गृध्राण कोट्यो निवसन्ति तत्र पारावतोलूक तथान्यपक्षिणः॥४२
आशीविषा दारुण तत्र सन्ति देशप्रदेशेषु[3] महाविषोग्राः।
विचित्रिका वृश्चिक-मूषिकाश्च एतान आवासु सुदुष्टप्राणिनाम्॥४३

1 B जीर्णप्रवृद्धं धुतवेदिकं 2 B च
3 B देशे प्र०

देशे च देशे अमनुष्य[1]भूयो उच्चारप्रस्त्रावविनाशितश्च ।
कृमिकीटखद्योतकपूरितश्च[2] श्वभिः शृगालैश्च निनादितश्च ॥४४
भेरुण्डका दारुण तत्र सन्ति मनुष्यकुणपानि च भक्षयन्तः[3] ।
तेषां च निर्याणु प्रतीक्षमाणाः श्वानाः शृगालाश्च वसन्त्यनेके ॥४५
ते दुर्बला नित्य क्षुधाभिभूता देशेषु देशेषु विखादमानाः ।
कलहं करोन्ताश्च निनादयन्ति सुभैरवं तद्गृहमेवरूपम् ॥४६
सुरौद्रचित्ता पि वसन्ति यक्षा मनुष्यकुणपानि विकड्ढमानाः ।
देशेषु देशेषु वसन्ति तत्र शतापदी गोनसकाश्च व्याडाः ॥४७
देशेषु देशेषु च निक्षिपन्ति ते पोतकान्यालयनानि कृत्वा ।
न्यस्तानि न्यस्तानि च तानि तेषां ते यक्षभूयो परिभक्षयन्ति ॥४८
यदा च ते यक्ष भवन्ति तृप्ताः परसत्त्व खादित्व सुरौद्रचित्ताः ।
परसत्त्वमांसैः परितृप्तगात्राः कलहं तदा तत्र करोन्ति तीव्रम् ॥४९
विध्वस्तलेनेषु वसन्ति तत्र कुम्भाण्डका दारुणरौद्रचित्ताः ।
वितस्तिमात्रास्तथ हस्तमात्रा द्विहस्तमात्राश्चनुचंक्रमन्ति ॥५०॥
ते चापि श्वानान् परिगृह्य पादैरुत्तानकान् कृत्व तथैव भूमौ ।
ग्रीवासु चोत्पीड्य विभर्त्सयन्तो[4] व्यावाधयन्तश्च[5] रमन्ति तत्र ॥५१॥
नानाश्च कृष्णाश्च तथैव दुर्बला उच्चा महन्ताश्च वसन्ति प्रेताः ।
जिघत्सिता भोजन मार्गमाणा आर्तस्वरं क्रन्दिषु तत्र तत्र ॥५२॥
सूचीमुखा गोणमुखाश्च केचित् मनुष्यमात्रास्तथ श्वानमात्राः ।
प्रकीर्णकेशाश्च करोन्ति शब्दमाहारतृष्णापरिदह्यमानाः ॥५३॥
चतुर्दिशं चात्र विलोकयन्ति गवाक्ष उल्लोकनकेहि नित्यम् ।
ते यक्षप्रेताश्च पिशाचकाश्च गृध्राश्च आहार गवेषमाणाः ॥५४॥

1 B देशे च अमनु०
2 B पूतिकश्च
3 B ०पानि विभक्त०
4 B वितंसयन्तो
5 B व्यायासयन्तश्च ; Tib. ཁང་བུར་བཅུག་པ ।

M. 53 ... ... ... ... ... ... bhakṣā ।
prakīrṇakeśāccāśca karo......i.........ṃ āhāra-tṛṣṇāy... ॥
M. 54 ... ... ... ... ... ... ।
... ... ... ... [ā]hāra-gameṣamānā ॥

एतादृशं भैरवु तद्गृहं भवेत् महन्तमुच्चं च सुदुर्बलं च ।
विजर्जरं दुर्बलमित्वरं च पुरुषस्य एकस्य परिग्रहं भवेत् ॥५५॥
स च बाह्यतः स्यात् पुरुषो गृहस्य निवेशनं तच्च भवेत् प्रदीप्तम् ।
सहसा समन्तेन चतुर्दिशं च ज्वालासहस्रैः परिदीप्यमानम् ॥५६॥
वंशाश्च दारूणि च अग्नितापिताः करोन्ति शब्दं गुरुकं सुभैरवम् ।
प्रदीप्त स्तम्भाश्च तथैव भित्तयो यक्षाश्च प्रेताश्च मुचन्ति नादम् ॥५७॥
ज्वालूषिता[1] गृध्रशताश्च भूयः कुम्भाण्डकाः प्लोष्टमुखा भ्रमन्ति ।
समन्ततो व्याडशताश्च तत्र नदन्ति क्रोशन्ति च दह्यमानाः ॥५८॥
पिशाचकास्तत्र बहू भ्रमन्ति संतापिता अग्निन मन्दपुण्याः ।
दन्तेहि पाटित्व ते[2]अन्यमन्यं रुधिरेण सिञ्चन्ति च दह्यमानाः ॥५९॥
भेरुण्डका कालगताश्च तत्र खादन्ति सत्त्वाश्च ते[2] अन्यमन्यम् ।
उच्चार दह्यत्यमनोज्ञगन्धः प्रवायते लोकि चतुर्दिशासु ॥६०॥
शतापदीयो प्रपलायमानाः कुम्भाण्डकास्ताः परिभक्षयन्ति ।
प्रदीप्तकेशाश्च भ्रमन्ति प्रेताः क्षुधाय दाहेन च दह्यमानाः ॥६१॥

---

1 B संलूषिता ; Tib. ཚིག་པར་འགྱུར། 2 J ति

---

M. 55 Etādṛś... ... bhīravatan niveśanaṃ ma... ।
... ... ... ... ... ... ॥
M. 56 ... stasya āsyān niveśanna tacca bha dīptam ।
sahasā sa ... ... ... ... ॥
M. 57 ... ... ... ... ... ... ।
patamti s[t]aṃbhācca tathaiva bha...ya...pretāśca
karo[nti]...॥
M. 58 ... ... ... ... ... ... ।
... ... ... ... krośu dahyamāṇā ॥
M. 59 Pi......bahu bh......manti s ... ... ।
... ... ... ... ... ... ॥
M. 60 ... ... [ta]tra khādanti vyāḍāni ca e[ka]mekam ।
uccāradahy...am ... ... ... ... ॥
M. 61 ... ... ... ... ... ... yanti ।
pradīptakeśāśca bhramanti pretā kṣudhāya agnīna
ca...hyamāṇā ॥

एतादृशं भैरव तन्निवेशनं ज्वालासहस्रैर्हि विनिश्चरद्भिः ।
पुरुषश्च सो तस्य गृहस्य स्वामी द्वारस्मि अस्थासि विपश्यमानः ॥६२॥
शृणोति चासौ स्वक[1] अत्र पुत्रान् क्रीडापनैः[2] क्रीडनसक्तबुद्धीन् ।
रमन्ति ते क्रीडनकप्रमत्ता यथापि बाला अविजानमानाः ॥६३॥
श्रुत्वा च सो तत्र प्रविष्टु क्षिप्रं प्रमोचनार्थाय तदात्मजानाम् ।
मा मह्य बाला इमि सर्वे दारका दह्येयु नश्येयु च क्षिप्रमेव ॥६४॥
स भाषते तेषमगारदोषान् दुःखं इदं भोः कुलपुत्र दारुणम् ।
विविधाश्च सत्त्वेह अयं च अग्नि महन्तिका दुःखपरंपरा तु[3] ॥६५॥
आशीविषा यक्ष सुरौद्रचित्ताः कुम्भाण्डप्रेता बहवो वसन्ति ।
भेरुण्डका श्वानशृगालसंघा गृध्राश्च आहार गवेषमाणाः ॥६६॥
एतादृशास्मिन्[4] बहवो वसन्ति विनापि चाग्नेः परमं सुभैरवम् ।
दुःखं इदं केवलमेवरूपं समन्ततश्चाग्निरयं प्रदीप्तः ॥६७॥
ते चोद्यमानास्तथ बालबुद्धयः कुमारकाः क्रीडनके प्रमत्ताः ।
न चिन्तयन्ते पितरं भणन्तं न चापि तेषां मनसीकरोन्ति ॥६८॥

---

1 B स्वके 2 J क्रीड़ापनक॰ 3 B ॰पराल 4 B ॰दृशाल

---

M. 62 [E]tādṛśc... ... ... ... ... ।
... ... [svā]mi dvārasmin asthin paśyamāṇā ॥

M. 63 Śṛṇoti...ti ca atra(?) orasā krīḍamā ... ... ।
... ... ... ... ... ... ॥

M. 64 Śrutv[ā] ca...st...ṣṭa kṣipraṃ parimo[ca]nārthāya tad-ātma-jānām ।
mā mam ... ... ... ... ... ॥

M. 65 ... [bhā]ṣ[a]ti duḥ[kh] ... ... ... ।
vividhāni sa...a...[a]yaṃśca ag ... ... ॥

M. 66 ... ... ... ... ... ... ।
... ...[svā]na... ... ... māṇā... ॥

M. 67 E...[dṛ]śa at[ra] ... ... ... ... ।
... ... ... ... ... ... ॥

M. 68 ...r...āti bāla-buddha[ku]mārakākr ... ... ।
... ... ... ... ... ... ॥

पुरुषश्च सो तत्र तदा विचिन्तयेत् सुदुःखितोऽस्मी[1] इह पुत्रचिन्तया ।
किं मह्य पुत्रेहि अपुत्रकस्य मा नाम दह्येयुरिहाग्निना इमे ॥६९॥
उपायु[2] सो चिन्तयि तस्मि काले लुब्धा इमे क्रीडनकेषु बालाः ।
न चात्र क्रीडा च रती च काचिद् बालान हो[3] यादृशु मूढभावः ॥७०॥
स तानवोचच्छृणुथा कुमारका नानाविधा यानक या ममास्ति ।
मृगैरजैर्गोणवरैश्च युक्ता उच्चा महन्ता समलंकृता च ॥७१॥
ता बाह्यतो अस्य निवेशनस्य निर्धावथा तेहि करोथ कार्यम् ।
युष्माकमर्थे मय कारितानि निर्याथ तैस्तुष्टमनाः समेत्य ॥७२॥
ते यान एतादृशका निशाम्य आरब्धवीर्यास्त्वरिता हि भूत्वा ।
निर्धावितास्तत्क्षणमेव सर्वे आकाशि तिष्ठन्ति दुखेन मुक्ताः ॥७३॥
पुरुषश्च सो निर्गत[4] दृष्ट्व दारकान् ग्रामस्य मध्ये स्थितु चत्वरस्मिन् ।
उपविश्य सिंहासनि तानुवाच अहो अहं निर्वृतु अद्य मार्षाः ॥७४॥
ये दुःखलब्धा मम ते तपस्विनः पुत्राः प्रिया ओरस विंश बालाः ।
ते दारुणे दुर्गगृहे अभूवन् बहुजन्तुपूर्णे च सुभैरवे च ॥७५॥

---

1 B ०स्मि  2 B उपाय  3 B हे  4 B निर्गति

---

M. 69 ... ... ...c[i]ntayi ... ... ।
kiṃ mahya putrebh[i] ... mānāma ... ॥
M. 70 ... ... ... ... ... ... ।
...ca atra [kr]īḍ...t...cia...l...ya. mūḍha-lobham ॥
M. 71 Sa tān avoca śru... ... ... ... ।
...[ma]hantā [ra]thagoṇa yukta ... ... ॥
M. 72 Te bāhyata [a]sya ni...nasya...thātebhi kasokrīḍā-kārāṃ ।
... ... ... ... ... ... ॥
M. 73 ...[etādṛ]śakā [śru]ṇitvā ārabdha-vīryyātvaritāṃ tvar[i]tvā ।
nirddhāpitāṃ tasmi kṣaṇasmi sarvbe a ... ॥
M. 74 ... ... ... ... ... ... ।
[u]paviṣṭa sīhāsani abravī girā aho a[haṃ]...rv... taṃ a... ॥
M. 75 ... ...i ... tā niveśana bahu du... ।
...r...sudāru[ṇe] ... ... ... ... ॥

आदीप्तके ज्वालसहस्रपूर्णे रता च ते क्रीडरतीषु आसन्।
मया च ते मोचित अद्य सर्वे येनाहु[1] निर्वाणु समागतोऽद्य ॥७६॥
सुखस्थितं तं पितरं विदित्वा उपगम्य ते दारक एवमाहुः।
ददाहि नस्तात यथाभिभाषितं त्रिविधानि यानानि मनोरमाणि ॥७७॥
सचेत्तव[2] सत्यक तात सर्वं यद्भाषितं तत्र निवेशने ते।
त्रिविधानि यानानि ह संप्रदास्ये ददस्व कालोऽयमिहाद्य तेषाम् ॥७८॥
पुरुषश्च सो कोशवली भवेत सुवर्णरूप्यामणिमुक्तिकस्य।
हिरण्य दासाश्च अनल्पकाः स्युरुपस्थपे एकविधा स याना[3] ॥७९॥
रत्नामया[4] गोणरथा[4] विशिष्टाः[4] सवेदिकाः[4] किङ्किणिजालनद्धाः[4]।
छत्रध्वजेभिः समलङ्कृताश्च[5] मुक्तामणीजालिकछादिताश्च[5] ॥८०॥
सुवर्णपुष्पाण कृतैश्च दामै[6]र्देशेषु देशेषु प्रलम्बमानैः।
वस्त्रैरुदारैः परिसंवृताश्च प्रत्यास्तृता[7] दुष्यवरैश्च शुक्लैः ॥८१॥
मृदुकान पट्टान तथैव तत्र वरतूलिकासंस्तृत येऽपि ते रथाः।
प्रत्यास्तृताः कोटिसहस्रमूल्यैर्वरैश्च कोच्कैर्वक[8]हंसलक्षणैः ॥८२॥
श्वेताः सुपुष्टा बलवन्त गोणा महाप्रमाणा अभिदर्शनीयाः।
ये योजिता रत्नरथेषु तेषु परिगृहीताः[9] पुरुषैरनेकैः ॥८३॥

---

1 B येनाह; Tib. དེ་བས་ང ། 2 J सचैव तं

3 B ॰पस्थायका नेकविधान॰ 4 J ॰न् ; i.e. puts the words in accusative plural. 5 J ॰तांश्च 6 J सहस्रदामै॰

7 J ॰स्तृतान् 8 J कोटम्बक॰ 9 J परी॰

---

M. 76 ... ...[a]haṃ nirvṛta adya māriṣā ... ।
... ... ... ... ... ... ॥
M. 77 ...kh...ta[ṃ] taṃ pitaraṃ ... ... i ... ।
... ... ... ... ... ... ॥
M. 78 ...cehi te satya dadāhi tāta...bhāṣitaṃ tatra niveś... ।
... ... ... ... ... ... ॥
M. 79 .........[bha]veyāṃ suvarṇa-rūpya-maṇi-mukā-cānām ।
hiraṇya... ... ... ... ... ॥
M. 80 ... ... ...jālamaṇḍitānāṃ n... ।
ddhvajebhi chatrebhi svalaṃkṛtā ca ... ॥

एतादृशान् सो पुरुषो ददाति पुत्राण सर्वाण वरान् विशिष्टान् ।
ते चापि तुष्टात्तमनाश्च[1] तेहि दिशाश्च विदिशाश्च व्रजन्ति क्रीडकाः ॥८४॥
एमेव[2] हं शारिसुता महर्षी सत्त्वान त्राणश्च पिता च भोमि ।
पुत्राश्च ते प्राणिन सर्वि मह्यं त्रैधातुके कामविलग्न बालाः ॥८५॥
त्रैधातुकं चो[3] यथ तन्निवेशनं सुभैरवं दुःखशताभिकीर्णम् ।
अशेषतः प्रज्वलितं समन्ताज्जातीजराव्याधिशतैरनेकैः ॥८६॥
अहं च त्रैधातुकमुक्त शान्तो एकान्त स्थायी पवने वसामि ।
त्रैधातुकं चो[4] ममिदं परिग्रहो ये ह्यत्र दह्यन्ति ममेति पुत्राः ॥८७॥
अहं च आदीनव तत्र दर्शयी विदित्व त्राणं अहमेव चैषाम् ।
न चैव मे ते श्रुणि सर्वि बाला यथापि कामेषु विलग्नबुद्धयः ॥८८॥
उपायकौशल्यमहं प्रयोजयी यानानि त्रीणि प्रवदामि चैषाम् ।
ज्ञात्वा च त्रैधातुकि नेकदोषान् निर्धावनार्थाय वदाम्युपायम् ॥८९॥
मां चैव ये निश्रित भोन्ति पुत्राः षडभिज्ञत्रैविद्यमहानुभावाः ।
प्रत्येकबुद्धाश्च भवन्ति येऽत्र अविवर्तिका ये चिह बोधिसत्त्वाः ॥९०॥
समान पुत्राण हु तेष तत्क्षणमिमेन दृष्टान्तवरेण पण्डित ।
वदामि एकं इमु बुद्धयानं परिगृह्णथा सर्वि जिना भविष्यथ ॥९१॥
तच्चा वरिष्ठं सुमनोरमं च विशिष्टरूपं चिह सर्वलोके ।
बुद्धान ज्ञानं द्विपदोत्तमानामुदाररूपं तथ वन्दनीयम् ॥९२॥
बलानि ध्यानानि तथा विमोक्षाः समाधिनां कोटिशता च नेका ।
अयं रथो ईदृशको वरिष्ठो रमन्ति येनो[5] सद बुद्धपुत्राः ॥९३॥
क्रीडन्त[6] एतेन क्षपेन्ति रात्रयो दिवसांश्च पक्षानृतवोऽथ मासान् ।
संवत्सरानन्तरकल्पमेव च क्षपेन्ति कल्पान,सहस्रकोट्यः ॥९४॥
रत्नामयं यानमिदं वरिष्ठं गच्छन्ति येनो[5] इह बोधिमण्डे ।
विक्रीडमाना बहुबोधिसत्त्वा ये चो शृणोन्ती[7] सुगतस्य श्रावकाः ॥९५॥
एवं प्रजानाहि त्वमद्य तिष्य नास्तीह यानं द्वितियं कहचित् ।
दिशो दशा[8] सर्वे गवेषयित्वा स्थापेत्वुपायं पुरुषोत्तमानाम् ॥९६॥

1 B तुष्टान्तमनाश्च
2 B एवमेव
3 B च
4 B च
5 B येन
6 B ०न्ति
7 B च श्रृणोन्ति
8 B दश

पुत्रा ममा[1] यूयमहं पिता वो मया च निष्कासित यूय दुःखात्।
परिदह्यमाना बहुकल्पकोट्यस्त्रैधातुकातो भयभैरवातः ॥९७॥
एवं च हं तत्र वदामि निर्वृतिमनिर्वृता यूय तथैव चाद्य।
संसारदुःखादिह यूय मुक्ता बौद्धं तु यानं व[2] गवेषितव्यम् ॥९८॥
ये बोधिसत्त्वाश्च इहास्ति केचिच्छृण्वन्ति सर्वे मम बुद्धनेत्रीम्।
उपायकौशल्यमिदं जिनस्य येनो विनेती[3] बहुबोधिसत्त्वान् ॥९९॥
हीनेषु कामेषु जुगुप्सितेषु रता यदा भोन्तिमि अत्र[4] सत्त्वाः।
दुःखं तदा भाषति लोकनायको अनन्यथावादिरिहार्यसत्यम् ॥१००॥
ये चापि दुःखस्य अजानमाना मूलं न पश्यन्ति ह बालबुद्धयः।
मार्गं हि तेषामनुदर्शयामि समुदागमस्तृष्ण[5] दुःखस्य सम्भवः ॥१०१॥
तृष्णानिरोधोथ[6] सदा अनिश्रिता निरोधसत्यं तृतियं इदं मे।
अनन्यथा येन च मुच्यते नरो मार्गं हि भावित्व विमुक्त भोति ॥१०२॥
कुतश्च ते शारिसुता विमुक्ता असन्तग्राहातु विमुक्त भोन्ति।
न च ताव ते सर्वत मुक्त भोन्ति अनिर्वृतांस्तान् वदतीह नायकः ॥१०३॥
किकारणं नास्य वदामि मोक्षमप्राप्यिमामुत्तम[7]मग्रबोधिम्।
ममैष छन्दो अहु धर्मराजा सुखापनार्थायिह लोकि जातः ॥१०४॥
इय शारिपुत्रा[8] मम धर्ममुद्रा या पश्चिमे कालि मयाद्य[9] भाषिता।
हिताय लोकस्य सदेवकस्य दिशासु विदिशासु च देशयस्व ॥१०५॥
यश्चापि ते भाषति[10] कश्चि सत्त्वो अनुमोदयामीति वदेत वाचम्।
मूर्ध्नेन चेदं प्रतिगृह्य सूत्रं अविवर्तिकं तं नरु धारयेस्त्वम् ॥१०६॥
दृष्टाश्च तेनो[11] पुरिमास्तथागताः सत्कारु तेषां च कृतो अभूषि।
श्रुतश्च धर्मो अयमेवरूपो य एत सूत्रं अभिश्रद्दधेत ॥१०७॥
अहं च त्वं चैव भवेत दृष्टो अयं च सर्वो मम भिक्षुसंघः।
दृष्टाश्च सर्वे इमि बोधिसत्त्वा ये श्रद्दधे भाषितमेत[12] मह्यम् ॥१०८॥

---

1 B मम 2 B च 3 B ०ति
4 B यत्र 5 J समुदागता० 6 B ०धार्थ
7 B मोक्षमप्राप्तिमामु० 8 B ०त्र 9 B पश्चकाले मम अद्य
10 J भाषिति 11 B तेन 12 B ०मग्र।

सूत्रं इमं बालजनप्रमोहनमभिज्ञज्ञानान मि एतु[1] भाषितम्।
विषयो हि नैवास्तिह श्रावकाणां प्रत्येकबुद्धान गतिर्न चात्र ॥१०९॥
अधिमुक्तिसारस्तुव शारिपुत्र किंवा पुनर्मह्य इमेऽन्यश्रावकाः।
एतेऽपि श्रद्धाय ममैव यान्ति प्रत्यात्मिकं ज्ञानु न चैव विद्यते ॥११०॥
मा चैव त्वं स्तम्भिषु मा च मानिषु मायुक्तयोगीन वदेसि एतत्।
बाला हि कामेषु सदा प्रमत्ता अजानका धर्मु क्षिपेयु भाषितम् ॥१११॥
उपायकौशल्य क्षिपित्व[2] मह्यं या बुद्धनेत्री सद लोकि संस्थिता।
भृकुटिं करित्वान क्षिपित्व यानं विपाकु तस्येह शृणोहि तीव्रम् ॥११२॥
क्षिपित्व सूत्रं इदमेवरूपं मयि तिष्ठमाने परिनिर्वृते वा।
भिक्षूषु वा तेषु खिलानि कृत्वा तेषां विपाकं ममिहं[3] शृणोहि ॥११३॥
च्युत्वा मनुष्येषु अवीचि तेषां प्रतिष्ठ भोती परिपूर्णकल्पात्[4]।
ततश्च भूयोऽन्तरकल्पनेकांश्च्युताश्च्युतास्तत्र पतन्ति[5] बालाः ॥११४॥
यदा च नरकेषु च्युता भवन्ति ततश्च तिर्यक्षु व्रजन्ति भूयः।
सुदुर्बलाः श्वानशृगालभूताः परेष[6] क्रीडापनका भवन्ति ॥११५॥
वर्णेन ते कालक तत्र भोन्ति कल्माषका व्राणिक कण्डुलाश्च।
निर्लोमका दुर्बल भोन्ति भूयो विद्वेषमाणा मम अग्रबोधिम् ॥११६॥
जुगुप्सिता प्राणिषु नित्य भोन्ति लोष्टप्रहाराभिहता रुदन्तः।
दण्डेन[7] सन्त्रासित तत्र तत्र क्षुधापिपासाहत शुष्कगात्राः ॥११७॥
उष्ट्राथ वा गर्दभ भोन्ति भूयो भारं वहन्तः कशदण्डताडिताः।
आहारचिन्तामनुचिन्तयन्तो ये बुद्धनेत्री क्षिपि बालबुद्धयः ॥११८॥
पुनश्च ते क्रोष्टुक भोन्ति तत्र बीभत्सकाः काणकु कुण्डकाश्च[8]।
उत्पीडिता ग्रामकुमारकेहि लोष्टप्रहाराभिहताश्च बालाः ॥११९॥
ततश्च्यवित्वान च भूयु बालाः पञ्चाशतीनां सम योजनानाम्।
दीर्घात्मभावा हि भवन्ति प्राणिनो जडाश्च मूढाः परिवर्तमानाः ॥१२०॥

---

1 B ज्ञात्वा न ममैत
2 J ०त्वा
3 J मयिहं
4 B ०कल्पान्
5 B ०श्च्युताश्च तत्र प्रप०
6 J परेषु
7 B दण्डेषु
8 J कुण्ठकाश्च ; Tib. འཁྱོང་པོ །

अपादका भोन्ति च कोडसक्किनो विखाद्यमाना बहुप्राणिकोटिभिः ।
सुदारुणां ते अनुभोन्ति वेदनां क्षिपित्व सूत्रं इदमेवरूपम् ॥१२१॥
पुरुषात्मभावं च यदा लभन्ते ते कुण्डका लङ्गक भोन्ति तत्र ।
कुब्जाथ काणा च जडा जघन्या अश्रद्दधन्ता इम सूत्र मह्यम् ॥१२२॥
अप्रत्यनीयाश्च भवन्ति लोके पूतीमुखात्तेष प्रवाति गन्धः ।
यक्षग्रहो उक्रमि तेष काये अश्रद्दधन्तानिम बुद्धबोधिम् ॥१२३॥
दरिद्रका पेषणकारकाश्च उपस्थायका नित्य परस्य दुर्बलाः ।
आबाध तेषां बहुकाश्च भोन्ति अनाथभूता विहरन्ति लोके ॥१२४॥
यस्यैव ते तत्र करोन्ति सेवनामदातुकामो भवती स तेषाम् ।
दत्तंपि चो नश्यति क्षिप्रमेव फलं हि पापस्य इमेवरूपम् ॥१२५॥
यच्चापि ते तत्र लभन्ति औषधं सुयुक्तरूपं कुशलेहि दत्तम् ।
तेनापि तेषां रुजु भूय वर्धते सो व्याधिरन्तं न कदाचि गच्छति ॥१२६॥
अन्येहि चौर्याणि कृतानि भोन्ति डमराथ डिम्बास्तथ विग्रहाश्च ।
द्रव्यापहाराश्च कृतास्तथान्यैर्निपतन्ति तस्योपरि पापकर्मणः ॥९२७॥
न जातु सो पश्यति लोकनाथं नरेन्द्रराजं महि शासमानम् ।
तस्याक्षणेष्वेव हि वासु भोति इमां क्षिपित्वा मम बुद्धनेत्रीम् ॥१२८॥
न चापि सो धर्म शृणोति बालो बधिरश्च सो भोति अचेतनश्च ।
क्षिपित्व बोधीमिममेवरूपामुपशान्ति तस्या न कदाचि भोति ॥१२९॥
सहस्रनेका नयुतांश्च भूयः कल्पान कोट्यो यथ गङ्गबालिकाः ।
जडात्मभावो विकलश्च भोति क्षिपित्व सूत्रं इमु पापकं फलम् ॥१३०॥
उद्यानभूमी नरकोऽस्य भोति निवेशनं तस्य अपायभूमिः ।
खरसूकरा क्रोष्टुक भूमिसूचकाः प्रतिष्ठितस्येह भवन्ति नित्यम् ॥१३१॥
मनुष्यभावत्वमुपेत्य चापि अन्धत्व बधिरत्व जडत्वमेति ।
परप्रेष्य सो भोति दरिद्र नित्यं तत्कालि तस्याभरणानिमानि ॥१३५॥
वस्त्राणि चो व्याधयु[1] भोन्ति तस्य व्रणान कोटीनयुताश्च काये ।
विचर्चिका कण्डु तथैव पामा कुष्ठं किलासं तथ आमगन्धः ॥१३३॥
सत्कायदृष्टिश्च घनास्य भोति उदीर्यते क्रोधबलं च तस्य ।
संरागु तस्यातिभृशं च भोति तिर्याण योनीषु च सो सदा रमी ॥१३४॥

1 B व्याधय

सचेदहं शारिसुताद्य तस्य परिपूर्णकल्पं प्रवदेय दोषान् ।
यो ही ममा[1] एतु क्षिपेत[2] सूत्रं पर्यन्तु दोषाण न शक्य गन्तुम् ॥१३५॥
संपश्यमानो इदमेव चार्थं त्वां संदिशामी अहु शारिपुत्र ।
मा हैव त्वं बालजनस्य अग्रतो भाषिष्यसे सूत्रमिमेवरूपम् ॥१३६॥
ये तू इह व्यक्त बहुश्रुताश्च स्मृतिमन्तु[3] ये पण्डित ज्ञानवन्तः ।
ये प्रस्थिता उत्तममग्रबोधिं तान् श्रावयेस्त्वं परमार्थमेतत् ॥१६७॥
दृष्टाश्च येही बहुबुद्धकोट्यः कुशलं च यै रोपितमप्रमेयम् ।
अध्याशयश्चा दृढ येष चो[4] स्यात्तान् श्रावयेस्त्वं परमार्थमेतत् ॥१३८॥
ये वीर्यवन्तः सद मैत्रचित्ता भावेन्ति मैत्रीमिह दीर्घरात्रम् ।
उत्सृष्टकाया तथ जीविते च तेषामिदं सूत्र भणेः समक्षम् ॥१३९॥
अन्योन्यसंकल्प सगौरवाश्च तेषां[5] च वालेहि न संस्तवोऽस्ति ।
ये चापि तुष्टा गिरिकन्दरेषु तान् श्रावयेस्त्वं इद सूत्र भद्रकम् ॥१४०॥
कल्याणमित्रांश्च निषेवमाणाः पापांश्च मित्रान् परिवर्जयन्ताः ।
यानीदृशान् पश्यसि बुद्धपुत्रांस्तेषामिदं सूत्र प्रकाशयेसि ॥१४१॥
अच्छिद्रशीला मणिरत्नसादृशा वैपुल्यसूत्राण परिग्रहे स्थिताः ।
पश्येसि यानीदृश बुद्धपुत्रांस्तेषाग्रतः सूत्रमिदं वदेसि ॥१४५॥
अक्रोधना ये सद आर्जवाश्च कृपासमन्वागत सर्वप्राणिषु ।
सगौरवा ये सुगतस्य अन्तिके तेषाग्रतः सूत्रमिदं वदेसि ॥१४३॥
यो धर्मु भाषे परिषाय मध्ये असङ्गप्राप्तो वदि युक्तमानसः ।
दृष्टान्तकोटीनयुतैरनेकैस्तस्येद सूत्रं उपदर्शयेसि ॥१४४॥
मूर्ध्नाञ्जलिं यश्च करोति बद्ध्वा सर्वज्ञभावं परिमार्गमाणः ।
दशो दिशो[6] योऽपि च चङ्क्रमेत सुभाषितं भिक्षु गवेषमाणः ॥१४५॥
वैपुल्यसूत्राणि च धारयेत न चास्य रुच्यन्ति कदाचिदन्ये ।
एकांपि गाथां न च धारयेऽन्यतस्तं श्रावयेस्त्वं[7] वरसूत्रमेतत् ॥१४६॥

---

1 B मया 2 B क्षिपेय 3 B ०मन्त
4 B चो 5 B येषां 6 B दिशो दश
7 B ०न्यतः संश्रावयेस्त्वं

तथागतस्यो[1] यथ धातु धारयेत्तथैव यो मार्गति कोचि तं नरः।
एमेव यो मार्गति सूत्रमीदृशं लभित्व चो[2] मूर्धनि धारयेत ॥१४७॥
अन्येषु सूत्रेषु न काचि चिन्ता[3] लोकायतैरन्यतरैश्च शास्त्रैः।
बालान एतादृश भोन्ति गोचरास्तांस्त्वं विवर्जित्व प्रकाशयेरिदम् ॥१४८॥
पूर्णं पि कल्पं अहु शारिपुत्र वदेयमाकारसहस्रकोट्यः।
ये प्रस्थिता उत्तममग्रबोधिं तेषाग्रतः सूत्रमिदं वदेसि ॥१४९॥

इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याय औपम्यपरिवर्तो नाम तृतीयः ॥३॥

---

1 B ०तस्य 2 B च 3 B न कदाचि चिन्ता।

# अधिमुक्तिपरिवर्तः

अथ खल्वायुष्मान् सुभूतिरायुष्मांश्च महाकात्यायन आयुष्मांश्च महाकाश्यप आयुष्मांश्च महामौद्गल्यायन इममेवंरूपमश्रुतपूर्वं धर्मं श्रुत्वा भगवतोऽन्तिकात् संमुखमायुष्मतश्च शारिपुत्रस्य व्याकरणं श्रुत्वानुत्तरायां सम्यक्संबोधावाश्चर्यप्राप्ता अद्भुतप्राप्ता औद्बिल्यप्राप्तास्तस्यां वेलायामुत्थायासनेभ्यो येन भगवांस्तेनोपसंक्रामन्नुपसंक्रम्यैकांसमुत्तरासङ्गं[1] कृत्वा दक्षिणं जानु पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणाम्य[2] भगवन्तमभिमुखमुल्लोकयमाना अवनतकाया अभिनतकायाः प्रणतकायास्तस्यां वेलायां भगवन्तमेतदवोचन्[3] ।

वयं हि भगवन् जीर्णा वृद्धा महल्लका अस्मिन् भिक्षुसंघे स्थविरसंमता जराजीर्णीभूता निर्वाणप्राप्ताः स्म इति भगवन्निरुद्यमा अनुत्तरायां सम्यक् संबोधावप्रतिबलाः स्माप्रतिवीर्यारम्भाः स्म । यदापि भगवान् धर्मं देशयति[4] चिरं निषण्णश्च भगवान् भवति वयं च तस्यां धर्मदेशनायां प्रत्युपस्थिता भवामः । तदाप्यस्माकं भगवन् चिरं निषण्णानां भगवन्तं चिरं पर्युपासितानामङ्गप्रत्यङ्गानि दुःखन्ति सन्धिविसन्धयश्च दुःखन्ति । ततो वयं भगवन् भगवतो धर्मं देशयमानस्य* शून्यतानिमित्ताप्रणिहितं सर्वमाविष्कुर्मो नास्माभिरेषु बुद्धधर्मेषु बुद्धक्षेत्रव्यूहेषु वा बोधिसत्त्वविक्रीडितेषु वा तथागतविक्रीडितेषु वा स्पृहोत्पादिता । तत् कस्य हेतोः । यच्चास्माद्†भगवंस्त्रैधातुकान्निर्धाविता निर्वाणसंज्ञिनो वयं च जराजीर्णाः । ततो भगवन्न‡स्माभिरप्यन्ये बोधिसत्त्वा अववदिता अभूवन्ननुत्तरायां सम्यक्संबोधावनुशिष्टाश्च न च भगवंस्तत्रास्माभिरेकमपि स्पृहाचित्तमुत्पादितमभूत् । ते वयं भगवन्नेतर्हि भगवतोऽन्तिकाच्छ्रावकाणामपि व्याकरणमनुत्तरायां सम्यक्

---

1 J भगवांस्तेनोपसंक्रम्यैकांसमु०

2 B प्रणामयित्वा

3 J अवोचत्

4 J देशयेत्

---

* M. [de]śayamāṇasy[a]

† M. c=aiva Bhagavāṃ tr(ai)dh

‡ M. na ca Bhagavāṃ asmebhi

संबोधौ भवतीति श्रुत्वाश्चर्याद्भुतप्राप्ता महालाभप्राप्ताः* स भगवन्नद्य सहसैवेम-मेवंरूपमश्रुतपूर्वं तथागतघोषं श्रुत्वा महारत्नप्रतिलब्धाश्च स भगवन्नप्रमेय-रत्नप्रतिलब्धाश्च स। भगवन्नमार्गितमपर्येष्टमचिन्तितमप्रार्थितं[1] चास्माभि-†र्भगवन्निदमेवंरूपं महारत्नं प्रतिलब्धम्। प्रतिभाति नो भगवन् प्रतिभाति नः सुगत।

तद् यथापि नाम भगवन् कश्चिदेव पुरुषः पितुरन्तिकादपक्रामेत् ‡ सोऽपक्रम्या-न्यतरं जनपदप्रदेशं गच्छेत्। स तत्र बहूनि वर्षाणि विप्रवसेद् विंशतिं वा त्रिंशद्वा चत्वारिंशद् वा पञ्चाशद् वा। अथ स भगवन् महान् पुरुषो भवेत् स च दरिद्रः स्यात् स च वृत्तिं पर्येषमाण §आहारचीवरहेतोर्दिशो विदिशः[2] प्रक्रामन्नन्यतरं जनपदप्रदेशं गच्छेत्। तस्य च स पितान्यतमं जनपदं¶ प्रक्रान्तः स्याद् बहुधनधान्यहिरण्यकोशकोष्ठागारश्च भवेद् बहुसुवर्णरूप्यमणिमुक्तावैडूर्य-शङ्खशिलाप्रवाडजातरूपरजतसमन्वागतश्च भवेद् बहुदासीदासकर्मकर-पौरुषेयश्च भवेद् बहुहस्त्यश्वरथगवेडकसमन्वागतश्च$ भवेन्महापरिवारश्च** भवेन्महाजनपदेषु च धनिकः स्यादायोगप्रयोगकृषिवणिज्यप्रभूतश्च भवेत्।

अथ खलु भगवन् स दरिद्रपुरुष आहारचीवरपर्येष्टिहेतोर्ग्रामनगरनिगम-जनपदराष्ट्रराजधानीषु ††पर्यटमानोऽनुपूर्वेण यत्रासौ पुरुषो बहुधनहिरण्य-

1 B ०मपर्येष्टिमचि०    2 B ०र्दश दिशः

* M. āścarya prāptā mahā lābh

† M. pratilabdhāś ca asmebh[i] ... ryeṣ. c ... asme [bhi]

‡ M. Bhagavāṃ kaścid eva daha[ro] ... [sā]ntikāto pakrame ... pad,

§ M. sa Bhagavāṃ mahanto puru ... [pu]traśc a.........vṛtti paryeṣ ... [ā]hā[ra]

¶ M. na prakrānto bhaveyaṃ ... kāra-prabh[ūtaś] ca [bhave]yāṃ bahu suva(r)ṇa ... [śaṅ]kh(a)śil[ā]

$ M. [gav]eḍakaprabhūtaś ca bhaveyāṃ

** M. bhaveyāṃ mahā janapada pra ṣu ca dha ... n(i)ko bhaveyā

†† M. [na]gara nigama rā[ja] ... [ṣ]u vicaranto yena sa puriṣo mahā dhano bah ... (u) hiraṇya(ko)

सुवर्णकोशकोष्ठागारस्तस्यैव पिता वसति तन्नगरमनुप्राप्तो भवेत्। अथ खलु भगवन् स दरिद्रपुरुषस्य पिता बहुधनहिरण्यकोशकोष्ठागारस्तस्मिन् नगरे वसमानस्तं पञ्चाशद्वर्षनष्टं पुत्रं सततसमितमनुस्मरेत्* समनुस्मरमाणश्च न कस्यचिदाचक्षेदन्यत्रैक एवात्मनाध्यात्मं संतप्येदेवं च चिन्तयेत्। अहमस्मि जीर्णो वृद्धो महल्लकः प्रभूतं मे हिरण्यसुवर्णधनधान्यकोशकोष्ठागारं† संविद्यते न च मे पुत्रः कश्चिदस्ति। मा हैव मम कालक्रिया भवेत् सर्वमिदमपरिभुक्तं विनश्येत्। स तं पुनः पुनः पुत्रमनुस्मरेत्। अहो नामाहं निर्वृतिप्राप्तो ‡ भवेयं यदि मे स पुत्र इमं धनस्कन्धं परिभुञ्जीत।

अथ खलु भगवन् स दरिद्रपुरुष आहारचीवरं पर्येषमाणोऽनुपूर्वेण§ येन तस्य प्रभूतहिरण्यसुवर्णधनधान्यकोशकोष्ठागारस्य समृद्धस्य पुरुषस्य¶ निवेशनं तेनोपसंक्रामेत्$। अथ खलु भगवन् स तस्य दरिद्रपुरुषस्य पिता स्वके निवेशनद्वारे महत्या ब्राह्मणक्षत्रियविट्शूद्रपरिषदा परिवृतः पुरस्कृतो महासिंहासने** सपादपीठे सुवर्णरूप्यप्रतिमण्डित उपविष्टो हिरण्यकोटीशतसहस्रैर्व्यवहारं कुर्वन् वालव्यजनेन वीज्यमानो विततविताने पृथिवीप्रदेशे मुक्तकुसुमाभिकीर्णे रत्नदामाभिप्रलम्बिते†† महत्यर्द्ध्योपविष्टः स्यात्। अद्राक्षीत् स भगवन् दरिद्रपुरुषस्तं स्वकं पितरं स्वके निवेशनद्वारे एवंरूपयर्द्ध्योपविष्टं महता जनकायेन परिवृतं गृहपतिकृत्यं कुर्वाणम्। दृष्ट्वा‡‡ च पुनर्भीतस्त्रस्तः संविग्नः संहृष्टरोमकूपजात उद्विग्नमानस एवमनुविचिन्तयामास। सह-

---

* M. [*ko*]śa koṣṭākāraṃ ... māṇa satataṃ paṃcāśa varṣa palāvitaṃ pu ... tra[*ṃ*] anusma

† M. evaṃ ca cinteyāṃ a[*haṃ*] ... mahalako bahuṃ ca me nā(*ma*) hiraṇy ... kośa koṣṭākā

‡ M. kta vinaśyeyāṃ sa *(ca)* ... anusmareyāṃ ahaṃ hi nāma sodṛśe ... (n)irv(*b*)āna pr.

§ M, paryeṣṭi paryeṣamāṇ(o)

¶ M. hiraṇya kośa koṣṭākārasya pu

$ M. [*nive*]śa[*na*]ṃ te

** M. pariṣāyāṃ gṛha pati ... [*pura*] skṛta...parivṛta maha mā (?)

†† M. ...iru(?) vejīyam pṛthivī pra pralambhi [*te*]

‡‡ M. riddhīye anupraviṣṭa...dṛṣṭv [*ā*]

सैवायं मया राजा वा राजमात्रो वासादितो नास्त्यस्माकमिह किंचित् कर्म। गच्छामो वयम्। येन दरिद्रवीथी* तत्रास्माकमाहारचीवरमल्पकृच्छ्रेणैव उत्पत्स्यते। अलं मे चिरं विलम्बितेन। मा हैवाहमिह वैष्टिको वा गृह्येयान्यतरं वा दोषमनुप्राप्नुयाम्।

अथ खलु भगवन् स दरिद्रपुरुषो दुःखपरंपरामनसिकारभयभीतस्त्वरमाणः† प्रक्रामेत् पलायेन्न तत्र संतिष्ठेत्। अथ खलु भगवन् स आढ्यः पुरुषः स्वके निवेशनद्वारे सिंहासन उपविष्टस्तं स्वकं पुत्रं सहदर्शनेनैव प्रत्यभिजानीयात्। दृष्ट्वा च पुनस्तुष्ट उदग्र‡ आत्तमनस्कः प्रमुदितः प्रीतिसौमनस्यजातो भवेदेवं च चिन्तयेत्। आश्चर्यं यावद् यत्र हि नामास्य महतो हिरण्यसुवर्णधनधान्यकोशकोष्ठागारस्य परिभोक्तोपलब्धः। अहं चैतमेव पुनः[1] पुनः समनुस्मरामि। अयं च स्वयमेवेहागतः। अहं च जीर्णो वृद्धो महल्लकः§।

अथ खलु भगवन् स पुरुषः पुत्रतृष्णासंपीडितस्तस्मिन् क्षणलवमुहूर्ते जवनान् पुरुषान् संप्रेषयेत्। गच्छत मार्षा एतं पुरुषं शीघ्रमानयध्वम्। अथ खलु भगवंस्ते पुरुषाः सर्व एव जवेन प्रधावितास्तं[2] दरिद्रपुरुषमध्यालम्बेयुः¶। अथ खलु दरिद्रपुरुषस्तस्यां§ वेलायां भीतस्त्रस्तः संविग्नः संहृष्टरोमकूपजात उद्विग्नमानसो दारुणमार्तस्वरं मुञ्चेदारवेद् विरवेत्। नाहं युष्माकं किंचिदपराध्यामीति[3]वाचं भाषेत। अथ खलु ते पुरुषा बलात्कारेण तं दरिद्रपुरुषं विरवन्तमप्याकर्षेयुः**। अथ खलु स दरिद्रपुरुषो भीतस्त्रस्तः ††संविग्न उद्विग्नमानस एवं च चिन्तयेत्। मा तावदहं वध्यो दण्ड्यो भवेयं नश्यामीति। स मूर्छितो

---

1 J. पनः  2 J. प्रधावित्वा तं  3 B. अपराध्यमिति

---

* M. [va] yaṃ yena daridra vīdik

† M. manasi kārebhi tvara

‡ M. (pu)na udāgra cint

§ M. r...vṛddho mahalako sa tṛṣṇa prā. ... tasmi(m) samaye tasmiṃ k(ṣ)a(ṇ)e tasmi la

¶ M. tvā taṃ puruṣaṃ adyālambheyuḥ

§ M. [pu]ruṣas tāyāṃ velāyaṃ dhāruṇa ārtta svaraṃ [mu]

** M. na ākaṇḍeyuḥ atha sa daridra

†† M. udvigno nyun āhaṃ vadyo nirnīyām īti

धरण्यां प्रपतेत् विसंज्ञश्च* स्यादासन्ने चास्य स पिता भवेत्। स तान् पुरुषानेवं वदेत्। मा भवन्त एतं पुरुषमानयन्त्विति** तमेनं शीतलेन वारिणा परिसिञ्चित्वा† न भूय आलपेत्। तत् कस्य हेतोः। जानाति स गृहपतिस्तस्य दरिद्रपुरुषस्य हीनाधिमुक्तिकतामात्मनश्चोदारस्थामतां जानीते च ममैष‡ पुत्र इति।

अथ खलु भगवन् स गृहपतिरुपायकौशल्येन§ न कस्यचिदाचक्षेन्ममैष$ पुत्र इति। अथ खलु भगवन् स गृहपतिरन्यतरं पुरुषमामन्त्रयेत्। गच्छ त्वं भोः पुरुष। एनं दरिद्रपुरुषमेवं वदस्व। गच्छ त्वं भोः पुरुष येनाकाङ्क्षसि मुक्तोऽसि। एवं वदति स पुरुषस्तस्मै प्रतिश्रुत्य येन स दरिद्रपुरुषस्तेनोपसंक्रामेदुपसंक्रम्य तं दरिद्रपुरुषमेवं वदेत्। गच्छ त्वं भोः पुरुष येनाकाङ्क्षसि मुक्तोऽसीति। अथ खलु स दरिद्रपुरुष ¶ इदं वचनं श्रुत्वाश्चर्याद्भुतप्राप्तो भवेत्। स *** उत्थाय तस्मात् पृथिवीप्रदेशाद् येन†† दरिद्रवीथी तेनोपसंक्रामेदाहारचीवरपर्येष्टिहेतोः। अथ खलु स गृहपतिस्तस्य दरिद्र§§पुरुषस्याकर्षणहेतोरुपायकौशल्यं प्रयोजयेत्$$। स तत्र द्वौ पुरुषौ प्रयोजयेद्¶¶ दुर्वर्णावल्पौजस्कौ। गच्छतां भवन्तौ योऽसौ पुरुष इहागतोऽभूत्। तं युवां द्विगुणया दिवसमुद्रयात्मवचनेनैव भरयित्वेह मम निवेशने‡‡‡ कर्म कारापयेथाम्। सचेत् स एवं वदेत् किं कर्म कर्तव्यमिति स युवाभ्यामेवं वक्तव्यः संकारधानं शोधयितव्यं सहावाभ्या-

---

* M. [mū] rcchā āgaccheyā[m] vis

** M. (tam) puruṣaṃ anayavatha nam e

† M. [pa]riṣiṃcitvā na bhūyam ā(lape) yā ... [ka]sya heto jānāti [s]o

‡ M. jānāti ca mam eṣa putra

§ M. (pur)uṣa upāya kau...

$ M. (ācā) kṣati mama eṣo pu

¶ M. si atha daridra pu

*** M. (prā)pto bhaveyāṃ usthāya pṛthi...

†† M. yena taṃ daridrā ve

§§ M. puruṣasya ā

$$ M. ...(k)au(śa)lyaṃ prayoja(ye)yāṃ

¶¶ M. saṃprayo

‡‡‡ M. [i]ha niv.

मिति। अथ तौ पुरुषौ तं दरिद्रपुरुषं पर्येषयित्वा* तया क्रियया संपादयेताम्†। अथ खलु तौ द्वौ पुरुषौ स च दरिद्रपुरुषो वेतनं गृहीत्वा तस्य महाधनस्य पुरुषस्यान्तिकात्तस्मिन्नेव निवेशने संकारधानं शोधयेयुः। तस्यैव च महाधनस्य पुरुषस्य गृहपरिसरे कटपलिकुञ्चिकायां वासं कल्पयेयुः। स चाढ्यः‡ पुरुषो गवाक्षवातायनेन तं स्वकं पुत्रं पश्येत् संकारधानं शोधयमानम्। दृष्ट्वा च पुनराश्चर्यप्राप्तो भवेत्।

अथ खलु स गृहपतिः स्वकान्निवेशनादवतीर्यापनयित्वा माल्याभरणान्यपनयित्वा मृदुकानि वस्त्राणि चौक्षाण्युदाराणि मलिनानि वस्त्राणि प्रावृत्य** दक्षिणेन पाणिना पिटकं परिगृह्य§ पांसुना स्वगात्रं दूषयित्वा दूरत एव संभाषमाणो[1] येन स दरिद्रपुरुषस्तेनोपसंक्रामेदुपसंक्रम्यैवं वदेत्। वहन्तु भवन्तः पिटकानि मा तिष्ठत हरत पांसूनि। अनेनोपायेन¶ तं पुत्रमालपेत्$ संलपेच्चैनं वदेत्। इहैव त्वं भोः पुरुष कर्म कुरुष्व मा भूयोऽन्यत्र गमिष्यसि। सविशेषं तेऽहं वेतनकं††दास्यामि। येन येन च ते कार्यं भवेत्तद्विश्रब्धं§§ मां याचेर्यदि वा कुण्डमूल्येन यदि वा कुण्डिकामूल्येन यदि वा स्थालिकामूल्येन यदि वा काष्ठमूल्येन यदि वा लवणमूल्येन यदि वा भोजनेन यदि वा प्रावरणेन। ‡‡अस्ति मे भोः पुरुष जीर्णशाटी। सचेत्तया ते कार्यं$$ स्याद् याचेरहं तेऽनुप्रदास्यामि¶¶। येन येन ते भोः पुरुष

---

1 B संभापयमाणो

---

* M. (*pa*)ryeṣitvā ......  † M. sampādeyāsu

‡ M. sa ca āḍhya puruṣo .........

** M. dh(ū)ṣita gātra s.m.

§ M. ca dakṣ ......... [*piṭa*] kam ādhāyā paṃsu

¶ M. (*u*)pāye (*na*)......  $ M. .s, putram āl.

†† M. viśeṣan te vet.  $$ M. ...k. bhaveyā visra. yācey

‡‡ M. na asti ca me bh.  §§ M. saci taṃ kārya bhaveyā a

¶¶ M. dāsyām ī(*ti*)

कार्यमेवंरूपेण परिष्कारेण तं तमेवाहं ते सर्वमनुप्रदास्यामि*। निर्वृतस्त्वं भोः पुरुष भव यादृशस्ते† पिता तादृशस्तेऽहं मन्तव्यः। तत् कस्य हेतोः‡। अहं$ च वृद्धस्त्वं च दहरो मम च त्वया बहु कर्म कृतमिमं संकारधानं शोधयता¶ न च त्वया§ भोः पुरुषात्र** कर्म कुर्वता शाठ्यं वा वक्रता वा कौटिल्यं वा मानो वा म्रक्षो वा कृतपूर्वः करोषि वा। सर्वथा ते भोः पुरुष§§ न समनुपश्याम्येकमपि पापकर्म‡‡ यथैषामन्येषां पुरुषाणां कर्म कुर्वतामिमे दोषाः संविद्यन्ते। यादृशो मे पुत्र औरसस्तादृशस्त्वं ममाद्याग्रेण भवसि††।

अथ खलु भगवन् स¶¶ गृहपतिस्तस्य दरिद्रपुरुषस्य पुत्र[1] इति नाम कुर्यात् स च दरिद्रपुरुषस्तस्य$$ गृहपतेरन्तिके पितृसंज्ञामुत्पादयेत्। अनेन भगवन् पर्यायेण स गृहपतिः पुत्रकामतृषितो विंशतिवर्षाणि तं पुत्रं संकारधानं शोधापयेत्***। अथ विंशतेर्वर्षाणामत्ययेन स दरिद्रपुरुषस्तस्य गृहपतेर्निवेशने विश्रब्धो भवेन्निष्क्रमणप्रवेशे तत्रैव च कटपलिकुञ्चिकायां वासं कल्पयेत्।

अथ खलु भगवंस्तस्य गृहपतेर्ग्लान्यं प्रत्युपस्थितं भवेत् स मरणकालसमयं चात्मनः प्रत्युपस्थितं समनुपश्येत्। स तं दरिद्रपुरुषमेवं वदेत्। आगच्छ त्वं भोः पुरुष। इदं मम प्रभूतं हिरण्यसुवर्णधनधान्यकोशकोष्ठागार-

---

1 J ०स्तस्य पुत्र

---

* M. sarvbaṃ dāsyām iti nivṛ.

† M. ṣa bhavāhi yādṛśas te

‡ M. kasya heto　　　$ M. aha(ṃ) ṛ

¶ M. r. dhānaṃ sodhayamāṇena tv.

§ M. ca tvayā priya cakṣu......... ** M. puruṣa ...tra gaṭā

§§ M. ḥ karosi vā sarvbas te bho puru

‡‡ M. pi pāpa dharma yathā imeṣām any. ... (puru)ṣāṇāṃ gatamānānāṃ

†† M. (bhav)āhi　　¶¶ M. atha sa Bhagavāṃ āḍhya pu

$$ M. tasya daridra puruṣasya nāma la. eya s. ... pu-ṣo sya a

*** M. (ā)ḍhya puruṣaḥ putra-kāma-tṛṣita vi (ṃ) ... (śa) ti varṣāṇi putro saṃkāra-dhānaṃ sodh. ey (āṃ)

मस्त्यहं बाढग्लान इच्छाम्येतं यस्य दातव्यं यतश्च ग्रहीतव्यं यच्च निधातव्यं भवेत् सर्वं संजानीयाः। तत् कस्य हेतोः। यादृश एवाहमस्य द्रव्यस्य स्वामी तादृशस्त्वमपि मा च मे त्वं किंचिदतो विप्रणाशयिष्यसि।

अथ खलु भगवन् स दरिद्रपुरुषोऽनेन पर्यायेण तच्च तस्य गृहपतेः प्रभूतं हिरण्यसुवर्णधनधान्यकोशकोष्ठागारं संजानीयादात्मना च ततो निःस्पृहो भवेन्न च तस्मात् किंचित् प्रार्थयेदन्तशः सक्तुप्रस्थमूल्यमात्रमपि तत्रैव च कटपलिकुञ्चिकायां वासं कल्पयेत्तामेव दरिद्रचिन्तामनुविचिन्तयमानः।

अथ खलु भगवन् स गृहपतिस्तं पुत्रं शक्तं परिपालकं परिपक्वं विदित्वाव-मर्दितचित्तमुदारसंज्ञया च पौर्विकया दरिद्रचिन्तयार्तीयन्तं जेहीयमाणं जुगुप्स-मानं विदित्वा मरणकालसमये प्रत्युपस्थिते तं दरिद्रपुरुषमानाय्य महतो ज्ञातिसंघस्योपनामयित्वा राज्ञो वा राजमात्रस्य वा पुरतो नैगमजानपदानां च संमुखमेवं संश्रावयेत्। शृण्वन्तु भवन्तोऽयं मम पुत्र औरसो मयैव जनितः। अमुकं नाम नगरं तस्मादेष पञ्चाशद्वर्षो नष्टः। अमुको नामैष नाम्नाहम-प्यमुको नाम। ततश्चाहं नगरादेतमेव मार्गमाण इहागतः। एष मम पुत्रोऽह-मस्य पिता। यः कश्चिन्ममोपभोगोऽस्ति तं सर्वमस्मै पुरुषाय निर्यातयामि यच्च मे किंचिदस्ति प्रत्यात्मकं धनं तत् सर्वमेष एव जानाति।

अथ खलु भगवन् स दरिद्रपुरुषस्तस्मिन् समय इममेवंरूपं घोषं श्रुत्वाश्चर्या-द्भुतप्राप्तो भवेदेवं च विचिन्तयेत् सहसैव मयेदमेव तावद् हिरण्यसुवर्णधन-धान्यकोशकोष्ठागारं प्रतिलब्धमिति।

एवमेव भगवन् वयं तथागतस्य पुत्रप्रतिरूपकाः। तथागतश्चास्माकमेवं वदति पुत्रा मम यूयमिति यथा स गृहपतिः। वयं च भगवंस्तिसृभिर्दुःख-ताभिः संपीडिता अभूम। कतमाभिस्तिसृभिर्यदुत दुःखदुःखतया संस्कारदुःख-तया विपरिणामदुःखतया च संसारे च हीनाधिमुक्तिकाः। ततो वयं भगवता बहून् धर्मान् प्रत्यवरान् संकारधानसदृशाननुविचिन्तयिताः। तेषु चास्म प्रयुक्ता घटमाना व्यायच्छमाना निर्वाणमात्रं च वयं भगवन् दिवसमुद्रामिव पर्येषमाणा मार्गामः। तेन च वयं भगवन्निर्वाणेन प्रतिलब्धेन तुष्टा भवामो बहु च लब्धमिति मन्यामहे तथागतस्यान्तिकादेषु धर्मेष्वभियुक्ता घटित्वा व्याय-मित्वा। प्रजानाति च तथागतोऽस्माकं हीनाधिमुक्तिकतां ततश्च भगवानस्मानु-पेक्षते न संभिनत्ति नाचष्टे योऽयं तथागतस्य ज्ञानकोश एष एव युष्माकं भविष्यतीति। भगवांश्चास्माकमुपायकौशल्येनास्मिंस्तथागतज्ञानकोशे दायादान्

संस्थापयति। निःस्पृहाश्च वयं भगवंस्तत एवं जानीम एतदेवास्माकं बहुकरं यद्वयं तथागतस्यान्तिकाद्दिवसमुद्राभिव निर्वाणं प्रतिलभामहे। ते वयं भगवन् बोधिसत्त्वानां महासत्त्वानां तथागतज्ञानदर्शनमारभ्योदारां धर्मदेशनां कुर्मस्तथागतज्ञानं विवरामो दर्शयाम उपदर्शयामो वयं भगवंस्ततो निःस्पृहाः समानाः। तत् कस्य हेतोः। उपायकौशल्येन तथागतोऽस्माक-मधिमुक्तिं प्रजानाति। तच्च वयं न जानीमो न बुध्यामहे यदिदं भगवतैतर्हि कथितं यथा वयं भगवतो भूताः पुत्रा भगवांश्चास्माकं स्मारयति तथागत-ज्ञानदायादान्। तत् कस्य हेतोः। यथापि नाम वयं तथागतस्य भूताः पुत्रा इति। अपि[1] तु खलु पुनर्हीनाधिमुक्ताः सचेद् भगवानस्माकं पश्येदधिमुक्ति-बलं बोधिसत्त्वशब्दं भगवानस्माकमुदाहरेद् वयं पुनर्भगवता द्वे कार्ये कारापिता बोधिसत्त्वानां चाग्रतो हीनाधिमुक्तिका इत्युक्तास्ते चोदारायां बुद्धबोधौ समादापिताः। अस्माकं चेदानीं भगवानधिमुक्तिबलं ज्ञात्वेदमुदाहृतवाननेन वयं भगवन् पर्यायेणैवं वदामः। सहसैवास्माभिर्निःस्पृहैराकाङ्क्षितममा-र्गितमपर्येषितमचिन्तितमप्रार्थितं सर्वज्ञतारत्नं प्रतिलब्धं यथापीदं तथागतस्य पुत्रैः।

अथ खल्वायुष्मान् महाकाश्यपस्तस्यां वेलायामिमा गाथा अभाषत।

आश्चर्यभूता स्म तथाद्भुताश्च औद्बिल्यप्राप्ता स्म श्रुणित्व घोषम्।
सहसैव अस्माभिरयं तथाद्य मनोज्ञघोषः श्रुतु नायकस्य ॥१॥
विशिष्टरत्नान महन्तराशिर्मुहूर्तमात्रेणयमद्य लब्ध।
न चिन्तितो नापि कदाचि प्रार्थितस्तं श्रुत्व आश्चर्यगता स्म सर्वे ॥२॥
यथापि बालः पुरुषो भवेत उत्प्लावितो बालजनेन सन्तः।
पितुः सकाशातु अपक्रमेत अन्यं च देशं व्रजि सो सुदूरम् ॥३॥

---

1 J भूताः पुत्राः। अपि

---

2 M. ...r...tna...mahanta-r ... ... ... ।
... ... ... ... ... ॥
3 M. ...[*bhave*]y (*a*)ṃ utpādi(*to*)...la...nena bālaḥ ... ।
pito sakāśā[*to*] ... ... ... ... ॥

पिता च तं शोचति तस्मि काले पलायितं ज्ञात्व स्वकं हि पुत्रम् ।
शोचन्तु सो दिग्विदिशासु अंचे[1] वर्षाणि पञ्चाशदनूनकानि ॥४॥
तथा च सो पुत्र गवेषमाणो अन्यं महन्तं नगरं हि गत्वा ।
निवेशनं मापिय तत्र तिष्ठेत् समर्पितो कामुगणेहि पञ्चभिः ॥५॥
बहु॰ हिरण्यं च सुवर्णरूप्यं धान्यं धनं शङ्खशिलाप्रवाड़म् ।
हस्ती च अश्वाश्च पदातयश्च गावः पशूश्चैव तथैड़काश्च ॥६॥
प्रयोग आयोग तथैव क्षेत्रा दासी च दासा बहु प्रेष्यवर्गः ।
सुसत्कृतः प्राणिसहस्रकोटिभी राज्ञश्च सो वल्लभु नित्यकालम् ॥७॥
कृताञ्जली तस्य भवन्ति नागरा ग्रामेषु ये चापि वसन्ति ग्रामिणः ।
बहुवाणिजास्तस्य व्रजन्ति अन्तिके बहूहि कार्येहि कृताधिकाराः ॥८॥
एतादृशो ऋद्धिमतो नरः स्याज्जीर्णश्च वृद्धश्च महल्लकश्च ।
स पुत्रशोकं अनुचिन्तयन्तः क्षपेय रात्रिंदिव नित्यकालम् ॥९॥
स तादृशो दुर्मति मह्य पुत्रः पञ्चाश वर्षाणि[2] तदा पलानकः[3] ।
अयं च कोशो विपुलो ममास्ति कालक्रिया चो मम प्रत्युपस्थिता ॥१०॥

1 B हंचे  2 B & J वर्षापि  3 B पलायकः

4 M. ... ... putraṃ ।
... (ā)vidiśāsu aṇḍat. paṃcāśa varṣāṇi anūnakāni ॥

5 M. ...a [tha] ... ... ... ।
... ... [gu] ṇebhi paṃcabhi ॥

6 M. bahu hiraṇyaṃ ca suvarṇa tasya dhānya-dhana-mukti-
śil (ā) pravāṭaṃ ।
... ... [aśv]...c. ॥

7 M. ... ... [dāsī] ś ca dā ... hu-preṣya-vargā ।
susaṃskṛ ta prāṇ(a) sahasra-koṭibhi- rājñaśca val
labha nitya kāl ... ... ॥

8 M. ... ... [nā]garā grāmeṣu ... ।
nikas tasya vrajanti sāntike ba kārye bhi bahu-prakāraiḥ ॥

9 M. etādṛśa ṛ[ddhi] m. ... naras tadā ।
...[pu] tra-śokā anuci ... kālaṃ ॥

10 M. sa tādṛśo durmatim... [paṃ] cāśa varṣāṇi tadā palāpitaḥ ।
ayaṃ ... ... ... ... vipu.pasthitā ॥

प्रातिहार्येण तस्मान्महतो दृष्टिगताद्विनिवर्तितस्तथागतशासने च प्रतिष्ठापितः परिपाचितश्चावतारितश्च तथागतदर्शनाय च संचोदितः*। †कल्याणमित्रौ भगवन् मम तौ द्वौ दारकौ पुत्ररूपेण मम गृह उपपन्नौ यदुत पूर्वकुशलमूलस्मरणार्थम्।

एवमुक्ते भगवान् ‡जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्तथागतोऽर्हन् सम्यक्संबुद्धस्तं राजानं शुभव्यूहमेतदवोचत्। एवमेतन्महाराजैवमेतद् यथा वदसि। अवरोपितकुशलमूलानां[1]§ हि महाराज कुलपुत्राणां कुलदुहितॄणां च सर्वेषु भवगतिच्युत्युपपत्त्यायतनेषूपपन्नानां सुलभानि भवन्ति कल्याणमित्राणि यानि शास्तृकृत्येन ¶प्रत्युपस्थितानि भवन्ति। $यान्यनुत्तरायां सम्यक्संबोधौ शासकान्यवतारकाणि परिपाचकानि भवन्ति। उदारमेतन्महाराज **स्थानं यदुत कल्याणमित्रपरिग्रहस्तथागतदर्शनसमादापकः। पश्यसि त्वं महाराजैतौ द्वौ दारकौ। आह। पश्यामि भगवन् पश्यामि सुगत। भगवानाह। एतौ खलु पुनर्महाराज ††कुलपुत्रौ पञ्चषष्टीनां ‡‡गङ्गानदीवालिकासमानां तथागतानामर्हतां सम्यक्संबुद्धानामन्तिके पूजां करिष्यत इमं च सद्धर्मपुण्डरीकं धर्मपर्यायं §§धारयिष्यतः ¶¶सत्त्वानामनुकम्पार्थै मिथ्यादृष्टीनां च सत्त्वानां सम्यग्दृष्ट्ये वीर्यसंजननार्थम्।

अथ खलु कुलपुत्राः स राजा शुभव्यूहस्ततो $$गगनतलादवतीर्य दशनखमञ्जलिं प्रगृह्य तं भगवन्तं जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञं तथागत-

---

* M. darśanāya ca saṃcoditaḥ
† M. kalyā mitrā m.
‡ M. [jala]dhara garjita gho[sa]
§ M. .la mūlānāṁ
¶ M. [pra]tyupasthitā bhavati.
$ M. yāny anuttar.
** M. rāja sthānam yad idam kal
†† M. [kul]la putrā pañcaṣaṣṭīnām
‡‡ M. gaṅgā nadī vālik[ā]samā.
§§ M. dhārayiṣyanti santi satvā
¶¶ M. anukampāyām
$$ M. [ta] lā avataritvā daśa kh. m. jali pragṛhṇi[tvā]

---

1 B ०मूलानि

मर्हन्तं सम्यक्संबुद्धमेतदवोचत्। तत् साधु भगवन्[1] निर्दिशतु तथागतः कीदृशेन ज्ञानेन समन्वागतस्तथागतोऽर्हन् सम्यक्संबुद्धो येन *मूर्ध्न्युष्णीषो विभाति विमलनेत्रश्च भगवान् भ्रुवोर्मध्ये चोर्णा विभाति शशिशङ्खपाण्डराभा सा च समसहिता दन्तावली वदनान्तरे विराजति †बिम्बोष्ठश्च भगवांश्चारुनेत्रश्च सुगतः।

अथ खलु कुलपुत्राः स राजा शुभव्यूह इयद्भिर्गुणैस्तं भगवन्तं जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञं तथागतमर्हन्तं सम्यक्संबुद्धमभिष्टुत्यान्यैश्च गुणकोटी‡नयुतशतसहस्रैस्तं भगवन्तमभिष्टुत्य तस्यां वेलायां तं भगवन्तं जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञं तथागतमर्हन्तं सम्यक्संबुद्धमेतदवोचत्। आश्चर्यं भगवन्[2] यावन्महार्थमिदं[3] तथागतशासनम§चिन्त्यगुणसमन्वागतश्च तथागतप्रवेदितो धर्मविनयो यावत् सुप्रज्ञप्ता च तथागतशिक्षा। अद्याग्रेण वयं भगवन्न भूयश्चित्तस्य वशगा भविष्यामो न भूयो मिथ्यादृष्टेर्वशगा भविष्यामो न भूयः क्रोधस्य वशगा भविष्यामो न भूयः पापकानां चित्तोत्पादानां वशगा भविष्यामः। एभिरहं भगवन्नियद्भिरकुशलैर्धर्मैः समन्वागतो नेच्छामि भगवतोऽन्तिकमुपसंक्रमितुम्।

स तस्य भगवतो जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य पादौ शिरसाभिवन्द्यान्तरीक्षगत एवास्थात्। अथ खलु स राजा शुभव्यूहः सा च विमलदत्ता राजभार्या शतसहस्रमूल्यं मुक्ताहारं भगवत उपर्यन्तरीक्षेऽक्षैप्सीत्। समनन्तरक्षिप्तश्च स मुक्ताहारस्तस्य भगवतो मूर्ध्नि मुक्ताहारः कूटागारः संस्थितोऽभूच्चतुरस्रश्चतुःस्थूणः समभागः सुविभक्तो दर्शनीयः। तस्मिंश्च कूटागारे पर्यङ्कः प्रादुर्भूतोऽनेकदूष्यशतसहस्रसंस्तृतस्तस्मिंश्च पर्यङ्के तथागतविग्रहः पर्यङ्कबद्धः संदृश्यते स्म।

---

* M. [*mū*]rdhe ūṣṇīṣam srabhāsanti vi. tro ca bhagavām.

† M. ti bimboṣṭam ca bhagavām cā a.

‡ M. [*nayu*]ta śata sahasr(*e*)hi tam bhaga.

§ M. .guṇa samanvāga[*ta*]

---

1 J भगवान्　　　2 B भगवान् ; Tib. ཡ་མཚན །

3 B ०र्थमिदं ; Tib. དོན་ཆེ་ཞིང །

अथ खलु राज्ञः शुभव्यूहस्यैतदभवत्। महानुभावमिदं बुद्धज्ञानमचिन्त्यगुण-समन्वागतश्च तथागतो यत्र हि नामायं तथागतविग्रहः कूटागारमध्यगतः संदृश्यते प्रासादिको दर्शनीयः परमशुभवर्णपुष्करतया समन्वागतः।

अथ खलु भगवान् जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञ-स्तथागतश्चतस्रः पर्षदः आमन्त्रयते स्म। पश्यथ भिक्षवो यूयं शुभव्यूहं राजानं गगनतलस्थं सिंहनादं नदन्तम्। आहुः। पश्यामो भगवन्। भगवानाह। एष खलु भिक्षवः शुभव्यूहो राजा मम शासने भिक्षुभावं कृत्वा शालेन्द्रराजो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोके भविष्यति विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् विस्तीर्णवत्यां लोकधातावभ्युद्गतराजो नाम स कल्पो भविष्यति। तस्य खलु पुनर्भिक्षवः शालेन्द्रराजस्य तथागतस्यार्हतः सम्यक्संबुद्धस्याप्रमेयो बोधिसत्त्वसंघो भविष्यत्यप्रमेयः श्रावकसंघः। समा पाणितलजाता च वैडूर्यमयी सा विस्तीर्णवती लोकधातुर्भविष्यति। एवमचिन्त्यः स तथा-गतोऽर्हन् सम्यक्संबुद्धो भविष्यति। स्यात् खलु पुनः कुलपुत्रा युष्माकं काङ्क्षा वा विमतिर्वा विचिकित्सा वा अन्यः स तेन कालेन तेन समयेन शुभ-व्यूहो नाम राजाभूत्। न खलु पुनः कुलपुत्रा युष्माभिरेवं द्रष्टव्यम्। तत् कस्य हेतोः। अयमेव स पद्मश्रीर्बोधिसत्त्वो महासत्त्वस्तेन कालेन तेन समयेन शुभव्यूहो नाम राजाभूत्। स्यात् खलु पुनः कुलपुत्रा युष्माकं काङ्क्षा वा विमतिर्वा विचिकित्सा वा अन्या सा तेन कालेन तेन समयेन विमलदत्ता नाम राजभार्याभूत्। न खलु पुनः कुलपुत्रा युष्माभिरेवं द्रष्टव्यम्। तत् कस्य हेतोः। अयं स वैरोचनरश्मिप्रतिमण्डितध्वजराजो नाम बोधिसत्त्वो महासत्त्वस्तेन कालेन तेन समयेन विमलदत्ता नाम राजभार्याभूत् तस्य राज्ञः शुभव्यूहस्यानुकम्पायै तेषां च सत्त्वानां राज्ञः शुभव्यूहस्य भार्यात्वमभ्युप-गतोऽभूत्। स्यात् खलु पुनः कुलपुत्रा युष्माकं काङ्क्षा वा विमतिर्वा विचिकित्सा वा अन्यौ तौ तेन कालेन तेन समयेन द्वौ दारकावभूताम्। न खलु पुनः कुलपुत्रा युष्माभिरेवं द्रष्टव्यम्। तत् कस्य हेतोः। इमौ तौ भैषज्यराजश्च भैषज्यसमुद्गतश्च तेन कालेन तेन समयेन तस्य राज्ञः शुभव्यूहस्य पुत्रावभूताम्। एवमचिन्त्यगुणसमन्वागतौ कुलपुत्रा भैषज्यराजो भैषज्यसमुद्-गतश्च बोधिसत्त्वौ महासत्त्वौ बहुबुद्धकोटीनयुतशतसहस्रावरोपितकुशलमूला-

वेतावुभावपि सत्पुरुषावचिन्त्यधर्मसमन्वागतौ। ये चैतयोः सत्पुरुषयोर्नामधेयं धारयिष्यन्ति ते सर्वे नमस्करणीया भविष्यन्ति सदेवकेन लोकेन।

अस्मिन् खलु पुनः पूर्वयोगपरिवर्ते भाष्यमाणे चतुरशीतीनां प्राणिसहस्राणां विरजो विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धम्।

इति श्रीसद्धर्मपुण्डरीके धर्मपर्याये शुभव्यूहराजपूर्वयोगपरिवर्तो नाम पञ्चविंशतिमः ॥२५॥

# समन्तभद्रोत्साहन-परिवर्तः

अथ खलु समन्तभद्रो बोधिसत्त्वो महासत्त्वः पूर्वस्यां दिशि गणनां समतिक्रान्तैर्बोधिसत्त्वैर्महासत्त्वैः सार्धं परिवृतः पुरस्कृतः प्रकम्पद्भिः क्षेत्रैः प्रवर्षद्भिः पद्मैः प्रवाद्यमानैस्तूर्यकोटीनयुतशतसहस्रैर्महता बोधिसत्त्वानुभावेन महत्या बोधिसत्त्वविकुर्वया महत्या बोधिसत्त्वर्द्ध्या महता बोधिसत्त्वमाहात्म्येन महता बोधिसत्त्वसमाहितेन महता बोधिसत्त्वतेजसा जाज्वल्यमानेन महता बोधिसत्त्वयानेन महता बोधिसत्त्वप्रातिहार्येण महद्भिर्देवनागयक्षगन्धर्वासुरगरुड-किन्नरमहोरगमनुष्यामनुष्यैः परिवृतः पुरस्कृत एवमचिन्त्यैर्ऋद्धिप्रातिहार्यैः समन्तभद्रो बोधिसत्त्वो महासत्त्व इमां लोकधातुं संप्राप्तः। स येन गृध्रकूटः पर्वतराजो येन च भगवांस्तेनोपसंक्रामदुपसंक्रम्य भगवतः पादौ शिरसाभिवन्द्य सप्तकृत्वः प्रदक्षिणीकृत्य भगवन्तमेतदवोचत्। अहं भगवंस्तस्य भगवतो रत्नतेजोऽभ्युद्गतराजस्य तथागतस्य बुद्धक्षेत्रादिहागत इह भगवन् सहायां लोकधातावयं सद्धर्मपुण्डरीको धर्मपर्यायो देश्यत इति तमहं श्रवणायागतो भगवतः शाक्यमुनेस्तथागतस्य सकाशममूनि च भगवन्नेतावन्ति बोधिसत्त्वशतसहस्राणीमं सद्धर्मपुण्डरीकं धर्मपर्यायं श्रवणायागतानि। तत् साधु भगवन् देशयतु तथागतोऽर्हन् सम्यक्संबुद्ध इमं सद्धर्मपुण्डरीकं धर्मपर्यायमेषां बोधिसत्त्वानां महासत्त्वानां विस्तरेण। एवमुक्ते भगवान् समन्तभद्रं बोधिसत्त्वं महासत्त्वमेतदवोचत्। उद्घटितज्ञा हि कुलपुत्रैते बोधिसत्त्वा महासत्त्वाः। अपि त्वयं सद्धर्मपुण्डरीको धर्मपर्यायो यदुतासंभिन्नतथता। ते बोधिसत्त्वा आहुः। एवमेतद् भगवन्नेवमेतत् सुगत। अथ खलु यास्तस्यां पर्षदि भिक्षुभिक्षुण्युपासकोपासिकाश्च संनिपतितास्तासां सद्धर्मपुण्डरीके धर्मपर्याये प्रतिष्ठापनार्थं पुनरपि भगवान् समन्तभद्रं बोधिसत्त्वं महासत्त्वमेतदवोचत्। चतुर्भिः कुलपुत्र धर्मैः समन्वागतस्य मातृग्रामस्यायं सद्धर्मपुण्डरीको धर्मपर्यायो हस्तगतो भविष्यति। कतमैश्चतुर्भिः। यदुत बुद्धैर्भगवद्भिरधिष्ठितो भविष्यत्यवरोपितकुशलमूलश्च भविष्यति नियतराशिव्यवस्थितश्च भविष्यति सर्वसत्त्वपरित्राणार्थमनुत्तरायां सम्यक्संबोधौ चित्तमुत्-

पादयिष्यति। एभिः कुलपुत्र चतुर्भिर्धर्मैः समन्वागतस्य मातृग्रामस्यायं सद्धर्म-पुण्डरीको धर्मपर्यायो हस्तगतो भविष्यति।

अथ खलु समन्तभद्रो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्। अहं भगवन् पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यां वर्तमानायामेवंरूपाणां सूत्रान्तधारकाणां भिक्षूणां रक्षां करिष्यामि स्वस्त्ययनं करिष्यामि दण्डपरिहारं करिष्यामि विषदूषणं करिष्यामि यथा न कश्चित्तेषां धर्मभाणकानामवतार-प्रेक्ष्यवतारगवेष्यवतारं लप्स्यते न मारः पापीयानवतारप्रेक्ष्यवतारगवेष्यवतारं लप्स्यते न मारपुत्रा न मारकायिका देवपुत्रा न मारकन्या न मारपार्षद्या यावन्न भूयो मारपर्युत्थितो भविष्यति। न देवपुत्रा न यक्षा न प्रेता न पूतना न कृत्या न वेताडास्तस्य धर्मभाणकस्यावतारप्रेक्षिणोऽवतारगवेषिणोऽवतारं लप्स्यन्ते। अहं भगवंस्तस्य धर्मभाणकस्य सततसमितं नित्यकालं रक्षां करिष्यामि। यदा च स धर्मभाणकोऽस्मिन् धर्मपर्याये चिन्तायोगमनुयुक्तश्चंक्रमाभिरूढो भविष्यति तदाहं भगवंस्तस्य धर्मभाणकस्यान्तिके श्वेतषड्दन्तं गजराजमभिरुह्य तस्य धर्मभाणकस्य चंक्रमकुटीमुपसंक्रमिष्यामि बोधिसत्त्वगणपरिवृतोऽस्य धर्मपर्याय-स्यारक्षाय। यदा पुनस्तस्य धर्मभाणकस्यास्मिन् धर्मपर्याये चिन्तायोगमनु-युक्तस्य सत इतो धर्मपर्यायादन्तशः पदव्यञ्जनं परिभ्रष्टं भविष्यति तदाहं तस्मिन् श्वेतषड्दन्ते गजराजेऽभिरुह्य तस्य धर्मभाणकस्य संमुखमुपदर्शयित्वा इमं धर्मपर्यायमविकलं प्रत्युच्चारयिष्यामि। स च धर्मभाणको ममात्मभावं दृष्ट्वेमं च धर्मपर्यायमविकलं ममान्तिकाच्छ्रुत्वा तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातो भूयस्या मात्रयास्मिन् धर्मपर्याये वीर्यमारप्स्यते मम च सहदर्शनेन समाधिं प्रतिलप्स्यते धारण्यावर्तां च नाम धारणीं प्रतिलप्स्यते कोटीशतसहस्रावर्तां च नाम धारणीं प्रतिलप्स्यते सर्वरुतकौशल्यावर्तां च नाम धारणीं प्रतिलप्स्यते।

ये च भगवन् पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यां भिक्षवो वा भिक्षुण्यो वोपासका वोपासिका वैवं सूत्रान्तधारका एवं सूत्रान्तलेखका एवं सूत्रान्तमार्गका एवं सूत्रान्तवाचका ये पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यामस्मिन् धर्मपर्याये त्रिसप्ताहमेकविंशतिदिवसानि चंक्रमाभिरूढा अभियुक्ता भविष्यन्ति तेषामहं सर्वसत्त्वप्रियदर्शनमात्मभावं संदर्शयिष्यामि। तमेव श्वेतं षड्दन्तं गजराजमभिरुह्य बोधिसत्त्वगणपरिवृत एकविंशतिमे दिवसे

तेषां धर्मभाणकानां चंक्रममागमिष्यामि आगत्य च तान् धर्मभाणकान् परि-संहर्षयिष्यामि समादापयिष्यामि समुत्तेजयिष्यामि संप्रहर्षयिष्यामि। धारणीं चैषां दास्यामि यथा ते धर्मभाणका न केनचिद्धर्षणीया भविष्यन्ति न चैषां मनुष्या वामनुष्या वावतारं लप्स्यन्ते न च नार्योऽपसंहरिष्यन्ति। रक्षां चैषां करिष्यामि स्वस्त्ययनं करिष्यामि दण्डपरिहारं करिष्यामि विषदूषणं करिष्यामि। तेषां च वयं भगवन् धर्मभाणकानामिमानि धारणीपदानि दास्यामि। तानि भगवन् धारणीपदानि तद् यथा।

अदण्डे दण्डपतिदण्डावर्तनि दण्डकुशले दण्डसुधारि सुधारि सुधारपति बुद्धपश्यने सर्वधारणि आवर्तनि संवर्तनि संघपरीक्षिते संघनिर्घातनि धर्मपरीक्षिते सर्वसत्त्व[1]रुतकौशल्यानुगते सिंहविक्रीडिते अनुवर्ते वर्तनि वर्तालि स्वाहा।

इमानि तानि भगवन् धारणीपदानि यस्य बोधिसत्त्वस्य महासत्त्वस्य श्रोत्रेन्द्रियस्यावभासमागमिष्यन्ति वेदितव्यमेतत् समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्याधिष्ठानमिति।

अयं च भगवन् सद्धर्मपुण्डरीको धर्मपर्यायोऽस्मिन् जम्बुद्वीपे प्रचरमाणो येषां बोधिसत्त्वानां महासत्त्वानां हस्तगतो भविष्यति तैर्भगवन् धर्मभाण-कैरेवं वेदितव्यम्। समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्यानुभावेन यदस्माकमयं धर्मपर्यायो हस्तगतः समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्य तेजसा। समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्य चर्यायास्ते भगवन् सत्त्वा लाभिनो भविष्यन्ति बहुबुद्धावरोपितकुशलमूलाश्च ते सत्त्वा भविष्यन्ति तथा-गतपाणिपरिमार्जितमूर्धानश्च ते भगवन् सत्त्वा भविष्यन्ति। य इदं सूत्रं लिखिष्यन्ति धारयिष्यन्ति मम तैर्भगवन् प्रियं कृतं भविष्यति। य इदं सूत्रं लिखिष्यन्ति ये चास्यार्थमनुभोत्स्यन्ते लिखित्वा च ते भगवन्निदं सूत्रमित-श्च्युत्वा त्रयस्त्रिंशतां देवानां सभागतायोपपत्स्यन्ते सहोपपन्नानां चैषां चतुर-शीतिरप्सरसां सहस्राण्युपसंक्रमिष्यन्ति। भेरीमा[2]त्रेण मुकुटेन ते देवपुत्रा-स्तासामप्सरसां मध्ये स्थास्यन्ति। ईदृशः कुलपुत्रा इमं धर्मपर्यायं लिखित्वा पुण्यस्कन्धः कः पुनर्वादो य एतमुद्देक्ष्यन्ति स्वाध्यायिष्यन्ति चिन्तयिष्यन्ति

1 J drops सत्त्व

2 B तेऽधिमा० ; Tib. ཅོད་པན །

मनसिकरिष्यन्ति। तस्मात्तर्हि कुलपुत्राः सत्कृत्यायं सद्धर्मपुण्डरीको धर्मपर्यायो लिखितव्यः सर्वचेतः समन्वाहृत्य। यश्चाविक्षिप्तेन मनसिकारेण लिखिष्यति तस्य बुद्धसहस्रं हस्तमुपनामयिष्यति मरणकाले चास्य बुद्धसहस्रं संमुखमुपदर्शनं करिष्यति। न च दुर्गतिविनिपातगामी भविष्यति। इतश्च्युतश्च तुषितानां देवानां सभागतायोपपत्स्यते यत्र स मैत्रेयो बोधिसत्त्वो महासत्त्वस्तिष्ठति द्वात्रिंशद्वरलक्षणो बोधिसत्त्वगणपरिवृतोऽप्सरःकोटीनयुतशतसहस्रपुरस्कृतो धर्मं देशयति। तस्मात्तर्हि कुलपुत्राः पण्डितेन कुलपुत्रेण वा कुलदुहित्रा वायं सद्धर्मपुण्डरीको धर्मपर्यायः सत्कृत्य लिखितव्यः सत्कृत्योद्देष्टव्यः सत्कृत्य स्वाध्यायितव्यः सत्कृत्य मनसिकर्तव्यः। इमं कुलपुत्रा धर्मपर्यायं लिखित्वोद्दिश्य स्वाध्यायित्वा भावयित्वा मनसिकृत्वैवमप्रमेया गुणा भविष्यन्ति। तस्मात्तर्हि तेन पण्डितेन भगवन् कुलपुत्रेण वा कुलदुहित्रा वायं सद्धर्मपुण्डरीको धर्मपर्यायो धारयितव्य एतावन्तस्तेषां गुणानुशंसा भविष्यन्ति। तस्मात्तर्हि भगवन्नहमपि तावदिमं धर्मपर्यायमधिष्ठास्यामि यथा भगवन् ममाधिष्ठानेनायं धर्मपर्यायोऽस्मिन् जम्बुद्वीपे प्रचरिष्यतीति।

अथ खलु तस्यां वेलायां भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक्संबुद्धः समन्तभद्राय बोधिसत्त्वाय महासत्त्वाय साधुकारमदात्। साधु साधु समन्तभद्र यत्र हि नाम त्वमेवं बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय प्रतिपन्नः एवमचिन्त्यधर्मसमन्वागतोऽसि महाकरुणासंगृहीतेनाध्याशयेनाचिन्त्यसंगृहीतेन चित्तोत्पादेन यस्त्वं स्वयमेव तेषां धर्मभाणकानामधिष्ठानं करोषि। ये केचित् कुलपुत्राः समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्य नामधेयं धारयिष्यन्ति वेदितव्यं तैः शाक्यमुनिस्तथागतो दृष्ट इति। अयं च सद्धर्मपुण्डरीको धर्मपर्यायस्तस्य भगवतः शाक्यमुनेरन्तिकाच्छ्रुतः शाक्यमुनिश्च तथागतस्तैः पूजितः शाक्यमुनेश्च तथागतस्य धर्मं देशयतः साधुकारोऽनुप्रदत्तः। अनुमोदितश्चायं धर्मपर्यायो भविष्यति। शाक्यमुनिना च तथागतेन तेषां मूर्ध्नि पाणिः प्रतिष्ठापितो भविष्यति। भगवांश्च शाक्यमुनिस्तैश्चीवरैरवच्छादितो भविष्यति। तथागतशासनपरिग्राहकाश्च ते समन्तभद्र कुलपुत्रा वा कुलदुहितरो वा वेदितव्याः। न च तेषां लोकायते रुचिर्भविष्यति न काव्यप्रसृताः सत्त्वास्तेषामभिरुचिता भविष्यन्ति न नृत्तका न मल्ला नर्ल्लका न शौण्डिकौरभ्रिककौक्कुटिकसौकरिकस्त्रीपोषकाः

सत्त्वास्तेषामभिरुचिता भविष्यन्ति। ईदृशांश्च सूत्रान्तान् श्रुत्वा लिखित्वा धारयित्वा वाचयित्वा वा न तेषामन्यदभिरुचितं भविष्यति। स्वभावधर्मसमन्वागताश्च ते सत्त्वा वेदितव्याः। प्रत्यात्मिकश्च तेषां योनिशो मनसिकारो भविष्यति। स्वपुण्यबलाधाराश्च ते सत्त्वा भविष्यन्ति प्रियदर्शनाश्च ते भविष्यन्ति सत्त्वानाम्। एवं सूत्रान्तधारकाश्च ये भिक्षवो भविष्यन्ति। न तेषां रागो व्याबाधिष्यति न द्वेषो न मोहो नेर्ष्या न मात्सर्यं न म्रक्षो न मानो नाधिमानो न मिथ्यामानः। स्वलाभसंतुष्टाश्च ते समन्तभद्र धर्मभणका भविष्यन्ति। यः समन्तभद्र पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यां वर्तमानायामस्य सद्धर्मपुण्डरीकस्य धर्मपर्यायस्य धारकं भिक्षुं पश्येत् एवं चित्तमुत्पादयितव्यम्। गमिष्यत्ययं कुलपुत्रो बोधिमण्डं निर्जेष्यत्ययं कुलपुत्रो मारकलिचक्रं प्रवर्तयिष्यत्ययं धर्मचक्रं पराहनिष्यत्ययं धर्मदुन्दुभिं प्रपूरयिष्यत्ययं धर्मशङ्खं प्रवर्षयिष्यत्ययं धर्मवर्षमभिरोक्ष्यत्ययं धर्मसिंहासनम्। य इमं धर्मपर्यायं पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यां वर्तमानायां धारयिष्यन्ति न ते भिक्षवो लुब्धा भविष्यन्ति न चीवरगृद्धा न पात्रगृद्धा भविष्यन्ति। ऋजुकाश्च ते धर्मभाणका भविष्यन्ति त्रिविमोक्षलाभिनश्च ते धर्मभाणका भविष्यन्ति। दृष्टधार्मिकं च तेषां[1] निर्वर्तिष्यति। य एवंसूत्रान्तधारकाणां धर्मभाणकानां भिक्षूणां मोहं दास्यन्ति जात्यन्धास्ते सत्त्वा भविष्यन्ति। ये चैवंरूपाणां सूत्रान्तधारकाणां भिक्षूणामवर्णं संश्रावयिष्यन्ति तेषां दृष्ट एव धर्मे कायश्चित्रो भविष्यति। य एवं सूत्रान्तलेखकानामुच्चग्घनं करिष्यन्त्युल्लपिष्यन्ति ते खण्डदन्ताश्च भविष्यन्ति विरलदन्ताश्च भविष्यन्ति बीभत्सोष्ठाश्च भविष्यन्ति चिपिटनासाश्च भविष्यन्ति विपरीतहस्तपादाश्च भविष्यन्ति विपरीतनेत्राश्च भविष्यन्ति दुर्गन्धिकायाश्च भविष्यन्ति गण्डपिटकविचर्चिदद्रुकण्ड्वाकीर्णशरीराश्च भविष्यन्ति। य ईदृशानां सूत्रान्तलेखकानां सूत्रान्तवाचकानां च सूत्रान्तधारकाणां च सूत्रान्तदेशकानां चाप्रियां वाचं भूतामभूतां वा संश्रावयिष्यन्ति तेषामिदमागाढतरं पापकं कर्म वेदितव्यम्। तस्मात्तर्हि समन्तभद्रास्य धर्मपर्यायस्य धारकाणां भिक्षूणां दूरत एव प्रत्युत्थातव्यं यथा तथागतस्यान्तिके गौरवं कर्तव्यं तथा तेषामेव सूत्रान्तधारकाणां भिक्षूणामेवं गौरवं कर्तव्यम्।

---

1 B adds सांपरायिकं

अस्मिन् खलु पुनः समन्तभद्रोत्साहनपरिवर्ते निर्दिश्यमाने गङ्गानदीवालिकासमानां बोधिसत्त्वानां महासत्त्वानां कोटीशतसहस्रावर्ताया धारण्याः प्रतिलम्भोऽभूत्।

इति श्रीसद्धर्मपुण्डरीके धर्मपर्याये समन्तभद्रोत्साहनपरिवर्तो नाम षड्विंशतिमः ॥२६॥

## अनुपरीन्दनापरिवर्तः

अथ खलु भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक्संबुद्ध उत्थाय तस्माद्धर्मासनात् सर्वांस्तान् बोधिसत्त्वान् पिण्डीकृत्य दक्षिणेन पाणिनर्द्धग्रभिसंस्कारपरिनिष्पन्नेन दक्षिणहस्तेष्वध्यालम्ब्य तस्यां वेलायामेतदवोचत्। इमामहं कुलपुत्रा असंख्येयकल्पकोटीनयुतशतसहस्रसमुदानीतामनुत्तरां सम्यक्संबोधिं युष्माकं हस्ते परिन्दाम्यनुपरिन्दामि निक्षिपाम्युपनिक्षिपामि। यथा विपुला वैस्तारिकी भवेत्तथा युष्माभिः कुलपुत्राः करणीयम्।

द्वैतीयकमपि त्रैतीयकमपि भगवान् सर्वावन्तं बोधिसत्त्वगणं दक्षिणेन पाणिनाध्यालम्ब्यैतदवोचत्। इमामहं कुलपुत्रा असंख्येयकल्पकोटीनयुतशतसहस्रसमुदानीतामनुत्तरां सम्यक्संबोधिं युष्माकं हस्ते परिन्दाम्यनुपरिन्दामि निक्षिपाम्युपनिक्षिपामि। युष्माभिः कुलपुत्रा उद्ग्रहीतव्या धारयितव्या वाचयितव्या पर्यवाप्तव्या देशयितव्या प्रकाशयितव्या सर्वसत्त्वानां च संश्रावयितव्या। अमात्सर्योऽहं कुलपुत्रा अपरिगृहीतचित्तो विशारदो बुद्धज्ञानस्य दाता तथागतज्ञानस्य स्वयंभूज्ञानस्य दाता। महादानपतिरहं कुलपुत्रा युष्माभिरपि कुलपुत्रा ममैवानुशिक्षितव्यममतसरिभिर्भूत्वेमं तथागतज्ञानदर्शनं महोपायकौशल्यमागतानां कुलपुत्राणां कुलदुहितॄणां चायं धर्मपर्यायः संश्रावयितव्यः। ये चाश्राद्धाः सत्त्वास्तेऽस्मिन् धर्मपर्याये समादापयितव्याः। एवं युष्माभिः कुलपुत्रास्तथागतानां प्रतिकारः कृतो भविष्यति।

एवमुक्तास्ते बोधिसत्त्वा महासत्त्वा भगवता शाक्यमुनिना तथागतेनार्हता सम्यक्संबुद्धेन महता प्रीतिप्रामोद्येन स्फुटा अभूवन् महच्च गौरवमुत्पाद्य येन भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक्संबुद्धस्तेनावनतकायाः प्रणतकायाः संनतकायाः शिरांस्यवनाम्याञ्जलिं प्रगृह्य सर्वे एकस्वरनिर्घोषेण भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक्संबुद्धमेतदूचुः। तथा भगवन् करिष्यामो यथा तथागत आज्ञापयति। सर्वेषां च तथागतानामाज्ञां करिष्यामः परिपूरयिष्यामः। अल्पोत्सुको भगवान् भवतु यथासुखविहारी। द्वैतीयकमपि त्रैतीयकमपि स सर्वावान् बोधिसत्त्वगण एकस्वरनिर्घोषेणैवं भाषते स्म। अल्पोत्-

सुको भगवान् भवतु यथासुखविहारी। तथा भगवन् करिष्यामो यथा तथागत आज्ञापयति। सर्वेषां च तथागतानामाज्ञां परिपूरयिष्यामः।

अथ खलु भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक्संबुद्धः सर्वांस्तांस्तथागतानर्हतः सम्यक्संबुद्धानन्येभ्यो लोकधातुभ्यः समागतान् विसर्जयति स्म यथासुखविहारं च तेषां तथागतानामारोचयति स्म यथासुखं तथागता विहरन्त्वर्हन्तः सम्यक् संबुद्धा इति। तं च तस्य भगवतः प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक् संबुद्धस्य रत्नस्तूपं यथाभूमौ स्थापयामास तस्यापि तथागतस्यार्हतः सम्यक् संबुद्धस्य यथासुखविहारमारोचयामास।

इदमवोचद् भगवानात्तमनास्ते चाप्रमेया असंख्येयास्तथागता अर्हन्तः सम्यक् संबुद्धा अन्यलोकधात्वागता रत्नवृक्षमूलेषु सिंहासनोपविष्टाः प्रभूतरत्नश्च तथागतोऽर्हन् सम्यक् संबुद्धः स च सर्वावान् बोधिसत्त्वगणस्ते च विशिष्टचारित्रप्रमुखा अप्रमेया असंख्येया बोधिसत्त्वा महासत्त्वा ये पृथिवीविवरेभ्योऽभ्युद्गतास्ते च महाश्रावकास्ताश्च चतस्रः पर्षदः सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्निति।

इति श्रीसद्धर्मपुण्डरीके धर्मपर्यायेऽनुपरीन्दनापरिवर्तो नाम सप्तविंशतिमः समाप्तः ॥२७॥

ये धर्मा[1] हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत्।
तेषां च यो निरोध[2] एवं वादि महाश्रमणः ॥

---

1 J धर्मं०    2 J ०धो

# INDEX


अकनिष्ठ २३६
अकिलासि १३६
अक्षण ७०, ११४
अक्षयमति २, २८६, २६५
अक्षोभ्य १२६
अग्निखदा ५५, २६४
अग्रबोधि ६
अग्रयान ४८, ६६
अचला २६८
अच्छटा २६२
अच्छिद्रशील ७१
अजरथ ५५
अजात १८२, १८४
अजातशत्रु ३
अजित १३, १६, २०१, २१८, २२७
अतर्कावचर ३०
अद्भुत २३, ३४
अधिकार १०४
अधिमात्रकारुणिको नाम महाब्रह्म ११६
अधिमान ७, ४१, ४४, १७५, १८७, २२४, ३१२
अधिमुक्ति २०, २४, ४१, ७४, ८०, ८६, ११३
अध्याशय २२०
अनन्तचरित्र १६५
अनन्तनिर्देश १८
अनन्तमति १४
अनन्तविक्रामिन् २
अनभ्यसूय १८५
अनवतप्त २
अनवनामितवैजयन्ती १४४
अन्तरकल्प ५२, ६७
अन्तेवासी १८
अनागामिन् २२८
अनादिकर्मिक ५२
अनाभिभु ६२
अनिक्षिप्तधुर २, २०२
अनिमित्त ७३
अनिरुद्ध १
अनुकुट्टक १७८
अनुज्ञाताविन् २७
अनुत्पत्तिकधर्मक्षान्ति १७४, २१५, २७६
अनुपधि १७, २७५
अनुपममति २
अनुपरीन्दन ३१४
अनुप्रव्रजित १२६
अनुमोदना २२७
अनुव्यञ्जन १७०
अनुशासक २७५
अनुसन्धि २६४
अपस्मारक २६६
अप्रतिपुद्गल ५४
अप्रतिभिन्न १५३
अप्रत्यनीय ७०
अपायभूमि ११७
अफल्गु २६
अभयन्दद २६०
अभिगीत १२६
अभिज्ञज्ञानाभिभुव ११०
अभिनिर्हार २०७
अभिमान २८, २५३
अभिरति १२६

अभिश्रद्दधानता २१८
अभ्युद्गतराज ३०६
अमात्सर्य ३१४
अमिताभ २६६
अमितायु १२६
अमोघदर्शिन् २
अरूपिन् २२८
अर्हद्भूमि १३२, १४०,
अल्पाबाधता १६३, २८५
अल्पोत्सुक १७५, १७६, ३१४
अवतार २६८
अवतंसक २१८
अवलोकितेश्वर २, २८६, २६५
अवहेठित ११३
अविद्या ५७, ६७, १२३
अविवर्तिक २६, ६७, ६३
अविवर्त्य १०५, १८२
अवैवर्त्या १०७, २१४
अशैक्ष १, १४३
अश्मगर्भ १५८
अश्वजित् १
अष्टजातिप्रतिबद्धा २१५
अष्टविमोक्ष २८८
अष्टापद ५१
असङ्गज्ञान ४८
असङ्गणिकाराम २०२
असङ्गप्रतिभान २१५
असज्ञिन् २२८
असम्भिन्नतथता ३०८
असंस्कृत १८२, १८४
असुर ३
आकाशधातु १६७
आकाशप्रतिष्ठित १२६
आकाशस्वभाव १८२
आचारगोचर १८०, १८२, १८४
आचार्यभूमि २५०
आच्छोड़ित १०६
आजानेय १
आजीवक १८०
आज्ञातकौण्डिन्य १, २६
आत्मदृष्टि ५४
आत्मभाव ४३, १०५, १०७, १५७, १६५, २१२, २५६, २७२
आत्मभावप्रतिलम्भ ५७
आत्मभावविग्रह १५६, १६०
आत्मविग्रहस्तूप १६०
आनन्द १
आनन्दभद्र १४४
आनुलोमिकी १०५
आयोग ८२
आर्यसत्य १३, १४, ६८, १३०, २५१
आयुष्कषाय ३२
आरण्यधुत २०२
आरम्बण २३, ३१
आलेख्य ३८, ३६
आवेणिक २३
आवेणिकबुद्धधर्म ५७
आसेवक १८५
आहार-चीवर ७४, ७६
इतिवृत्तक ३४
इन्द्रदत्त २
इन्द्रध्वज १२६
इष्टामय ३७
ईर्यापथ १८४
ईश्वर २
ईश्वरवैनेय २६२
उच्चरघन ३१२
उच्चघित २५५
उच्छदक २२४
उज्जङ्गल १५४

| | | | |
|---|---|---|---|
| उज्जुक | ६१ | एकाहिक | २६६ |
| उत्पलक | २ | एकोत्सव | ३६ |
| उत्पाटिताक्षी | १३१ | ओडिगल्ल | १०२ |
| उत्तरमति | २ | ओमारक | २६६ |
| उत्तरासङ्ग | ७३ | ओरसा | १६, २८ |
| उद्गूरण | १७७ | ओलोकनक | ८४ |
| उद्घटितज्ञ | ३०८ | ओषधी | ८६ |
| उपक्लेश | २०७ | ओस्तारक | २६६ |
| उपदेश | ३४ | औद्बिल्यप्राप्त | ८१ |
| उपनन्द | १ | औपलम्भिक | २५७ |
| उपनिषा | २१६ | औपपादुक | १३५ |
| उपपत्ति | ३०४ | औरभ्रिक | १८३ |
| उपरिष्टिम | १२६ | कटपलिकुब्जिका | ७८ |
| उपलम्भिक | २१६ | कटसी | ३५ |
| उपस्तब्ध | २२२ | कथङ्कथा | २७, ५४, १६७ |
| उपस्थायक | १६२, १६३, २०० | कन्थ | १७७ |
| उपायकौशल्य | ४, २२, २३, ४० | कफ्फिण | १३७ |
| उपायकौशल्यपारमिता | २६६ | कपिलवस्तु | २०३ |
| उपालम्भ | १८५ | कर्केतन | १५८ |
| उल्लापित | २५५ | कर्मावरण | २५५ |
| उपेक्षा | २६६ | कलविङ्क | २३५ |
| उरुविल्वकाश्यप | १, १३७ | कल्प | २० |
| उष्णीष | ३०५ | कल्पकषाय | ३२, ५१ |
| ऊर्णा | ५ | कल्पसंक्षोभ | १७८ |
| ऋद्धि-प्रातिहार्य | ३०१ | कल्याणमित्र | ७१, ३०४ |
| ऋद्धिबल | ५७ | कषाय | ३२, ४४ |
| ऋद्धिमत् | १३५ | कात्यायन | १०६ |
| ऋद्धिविक्रीडित | २८२ | कृत्या | ३०६ |
| ऋल्लक | ३११ | कारण | ४६, ५४, ६८ |
| ऋषिपतन | ५४ | कालोदायिन् | १३७ |
| एकघन | १५३, १५६, १७० | काव्य | १८०, ३११ |
| एकजातिप्रतिबद्ध | २१६ | काश्यप | १०२, १३७ |
| एकयान | ३०, ३६ | काष्ठमूल्य | ७८ |
| एकरस | ६०, ६४ | किन्नर | ३ |
| एकात्मका | १६६ | किलासिता | १०, ६३, १८६ |

| | | | |
|---|---|---|---|
| क्लिीकृत | २०८ | गण | १४७ |
| कुटी | ३०६ | गणकमहामात्र | १०६ |
| कूटदन्ती | २६८ | गणाचार्य | २५६ |
| कुड्यकटलेपन | ५४ | गणिन् | १६३, २५६ |
| कुण्डमूल्य | ७८ | गण्ड | ३१२ |
| कुणप | ६२ | गति (षट्) | ५, ४२ |
| कुण्डक | ७० | गद्गदस्वर | १८२ |
| कुन्ती | २६८ | गडित | ६१ |
| कुन्दरक | २७२ | गन्धर्व | ३ |
| कुम्भाण्ड | २६६ | गया | २०३ |
| कुलपुत्राहो | १६८ | गयाकाश्यप | १३७ |
| कूटना | १८७ | गरपीड़ा | २०६ |
| केशिनी | २६८ | गरुड़ | ३ |
| कोकिल | २३५ | गरुड़ेन्द्र | ३ |
| कोटी | २१८ | गवांपति | १ |
| कोट्टराज | २७८, २८६ | गाथा | ३४ |
| कोड़सक्किन् | ७० | गिलान | ८, १८६ |
| कोश | १६ | गुह्यक | १२६ |
| कौक्कुटिक | १८०, ३११ | गुह्यगुप्त | २ |
| कौकृत्य | १८६ | गूथोड़िगल्ल | १०२, २८३ |
| कौण्डिन्यगोत्र | १३७ | गृध्रकूट | १, २८५, ३०८ |
| कौष्ठिल | १ | गृहस्थ | १५०, १५४, १६० |
| कौसीद्य | २२ | गेय | ३४ |
| क्रीड़ापन | ६४ | गोचर | १८१ |
| क्रीड़ारति | २२८ | गोपानसी | ६१ |
| क्रम | २१० | गौतमी | १७५ |
| क्लेश | १२८ | घोषमति | १४ |
| क्लेशकषाय | ३२ | चक्रवर्तिन् | २८ |
| क्षान्ति | ३६ | चक्रवाड़ | १६१, २३३, २४७ |
| क्षान्तिपारमिता | २१८ | चंक्रम | ७. ३०६ |
| क्षान्तिबल | ८८ | चन्द्र | २ |
| क्षीणास्रव | १ | चन्द्रप्रदीप | १३, २८२ |
| खरस्कन्ध | ३ | चन्द्रसूर्यप्रदीप | १३ |
| खुड्डक | ३०१ | चन्द्रसूर्यविमलप्रभासश्री | २७१ |
| गजराज | ३०६ | चन्द्रार्कदीप | २० |

चम्पकतैल २७२
चरिताविन् १२४
चर्याप्रदेश २७१
चातुर्द्वीपिक २१५
चातुर्महाराज ११२
चारिका ६४
चित्तव्यावृत्ति १६८
चित्तोत्पाद ३११
चिल ३८, १४३
चिलध्वज २६३
चीवर १३६
चुन्द १३७
चूड़ामणि १८६
चैलकभूत १३०
चैत्य १५४
चौक्ष ७८, १८५
छन्दराग ३५
छध्व २३१
छम्भितत्व ४६
जनयित्री २६६
जम्बुद्वीप १४८, २२८, २५२, ३१०
जलधर २६८
जातक ३४
जाम्बूनदाभास १०६
जिनविग्रह १६८
जिनात्मज ८६
जिनेन्द्र ७
ज्येष्ठधर्मनिर्देश १६६
ज्योतिष्प्रभ २
ज्ञानबल ५७, २७६
ज्ञानमुद्रासमाधि २८२
ज्ञानाकर ११२
ज्ञानोल्का २८२
झल्ल १८०, १८३
डमर ७०
डिम्ब ७०
तथत्व ६२
तथागत १०४
तथागतचीवर १५५
तथागतचैत्य १५४
तथागतज्ञानदर्शन ३०, ३१, ८१, २०१, २५२
तथागतपाणिपरिमार्जित १५३
तथागतबल ५६
तथागतलयन १५५
तथागतविग्रह १६०, ३०६
तथागतायुष्प्रमाण २०६
तमाल १०७
तत्तक २
ताड़ ३६
तायिन् २१
तिरश्चयोनि २४८
तिर्यग् २६५
तिलकूटा २६६
तिलपीड़ा २६६
तिष्य ६१
तीर्थ्य १८०
तीर्थिक १७८
तुरुष्क २७२
तुलकूट २६६
तुल्यनामधातु ४७
तुषित ३११
तृष्णा ६८
त्रयध्व १००
त्रिपरिवर्त १२३
त्रिभव ६२
त्रियान ३२, ६५
त्रिविमोक्ष ३१२
त्रिसाहस्र ८६
त्रैतीयक २६६

त्रैधातुक ५६, ६०, ६७
त्रैलोक्यविक्रामिन् २
त्रैविद्य ६३
दरिद्रवीथि ७६, ७७
दानपति २२८, ३१४
दानपारमिता २१८
दिवसमुद्रा ७७, ८०
दिवाविहार ८
दिष्ट्या ११३, १२२, २०६, २१०
दीपङ्कर २१, २०७
दुन्दुभिस्वर २५४
दुष्करचर्या २७२
दुष्यवर ६६
दुःखदुःखता ८०
दुर्गतिविनिपात ३११
दुरभिमोच्य १२७
देवदत्तभिक्षु १७०
देवदारुस्तूप ३७
देवसोपान १७०
देशिक १२८, १३१
द्वेष ५७
दृढ़स्थाम २०१
दृष्टधार्मिक ५८, २८०, ३१२
दृष्टान्त ३४, ४१, ४६, ७१, १३०, १८६
दृष्टान्तहेतु ५
दृष्टिकषाय ३२
दृष्टिकृत ६७
दृष्टिस्थित ६३
द्रुग्धचित्त ६६
धरणीन्धर २, २६७
धर्मकथिक १३३, १३४
धर्मकोश २०, ८६, १४३
धर्मकृत्य ६५
धर्मगगन १४५
धर्मचक्र ४८, ४६, ५३, ११३, ११४, १२२, २०३, २६३
धर्मदायाद ४७
धर्मधर २
धर्मनय २४८
धर्मनिर्मित ४७
धर्मनिरुक्ति २४६
धर्मनेत्री ५
धर्मपर्याय १४८, १५३, २०८
धर्मपूजा २७३
धर्मप्रभास १३४, १३५
धर्मप्राभृत १६२
धर्मभाणक १५, २१, १२५, १४८, १५०, १७६, १८५, २२५, २३३, २६६, २६७, ३०६
धर्मरहस्य १५३
धर्मराजन् १६६
धर्मलक्षण २३
धर्मश्रवणिक १६
धर्मशंख ३१२
धर्मसंगीति १८७
धर्मस्कन्ध १६७
धर्मस्तूप २७४
धर्मस्वामिन् ८६
धर्माभिसमय २१६
धर्मासन १५५
धातु ६
धातुविग्रह २८५
धातुस्तूप ४, २२३, २२४, २८८
धारणी १७७, २६५, २८१, ३०६
धारणीपद २६६, २६७, ३१०
धारणीप्रतिलम्भ २१५
धारणीमन्त्रपद २६८
धारण्यावर्ता ३०६
धुरावाह १६८

धूतगुण ६७
धूर्त २६०
धृतराष्ट्र २
धृति ५२
ध्यान ३७
ध्यानपारमिता २६६
ध्यानप्रीत्याहार १३५
ध्यजाग्रकेयूर २८२
नदीकाश्यप १, १३७
नन्द २
नरदत्त २
नरादित्य २२
नवाङ्ग ३४
नक्षत्रराज २
नक्षत्रराज-संकुसुमिताभिज्ञ २७१, २६८
नानाधातुक १३३
नानाधिमुक्त ३४
नामरूप १२३
नारायण २८४
निक्षेप १७६
नित्यज्वर २६६
नित्यपरिनिर्वृत १२६
निदान ३४
निरामिष १३३
निरुपादान ५६
निरीहक ६
निरुक्ति २३, ३१, २४६, २५०
निरोपधि २००
निर्ग्रन्थ १८०
निर्वाण १७, २०, २७, ३४, ४८, ५४, ८०, १००, १४२, २५१
निर्वाणनगर १८६
निर्वाणपर्यवसान ६१
निर्वाणभूमि ४४, २११
निर्वाणमार्ग १२२
निष्पलाव २६, ३३
नीवरण ५६
नैगम ८६
नैगमजानपद १८८
पञ्चकामगुण ५६
पञ्चगति ६४
पञ्चाभिज्ञ ६६
पटह ३६
पणव ३६
पदव्यञ्जन १८
पद्मप्रभ ५०, ५१
पद्मवृषभविक्रामिन् ५२
पद्मश्री २, २८६, २८७, ३०६
परिग्रहनिदान ५७
परिनिर्वाण ११२, १२७, २०७, १८७
परिनिर्वृत २५६, २६२, २८४, २८५
परिव्राजक १८०
परिनिष्पन्न १५६
परिनिष्पत्ति १५५
परिभूत २५३
परिषा २३२
परिष्कार ७६
परिसामन्तक ११२
परीत्त १७५
परीन्दन २६१
पर्यङ्क ३
पर्याय १६०
पर्येष्टिनिदान ५७, ५८
पामा ७०
पारमिंगत २६६
पारमिता १००, २१८, २५१, २६६
पिटक ३१२
पिण्डपात २६०
पितृज्ञा २८५
पिलिन्दवत्स १

पिथित १७०
पिशाचक ६२
पुण्यबलाधान २७६
पुण्याभिसंस्कार २१६
पुष्करता २६०
पुष्पदन्ती २६८
पुस्तक १४६, १५४, १२१, २२५
पुस्तकगत २६२, २६५, २७८
पूतन २६६
पूतिस्तम्भ ५५
पूर्णचन्द्र २
पूर्णमैत्रायणीपुत्र १३३
पूर्वप्रणिधानचर्या १४५
पूर्वयोग २७८
पूर्वयोगचर्या १३३
पेयाल १२०
पेषणकारक ७०
पैत्तिक ६५
प्रज्ञप्ति ६३, ३१
प्रज्ञाकूट १७१
प्रज्ञापारमिता १३, २१८
प्रणिधान ५१
प्रतिभान २६४
प्रतिरूपक ५२
प्रतिलम्भ १०५, १०७
प्रतिसंलयन १२५, २८१
प्रतिसंलीन १२५
प्रतिसंविद् १३५
प्रतीत्यसमुत्पाद १३, १४, १२३, २५१
प्रतीत्योत्पाद ६६
प्रत्यक्षदर्शी ६१
प्रत्यय १३१
प्रत्यात्मिक ६१, ६६, ३१२
प्रत्यात्मिकी ८६
प्रत्येकजिन ६६
प्रत्येकबुद्धभूमि १२८
प्रत्येकबुद्धयान २७, ६०
प्रत्येकबुद्धयानिक ६४
प्रत्येकबोधि २७
प्रत्येकयान ५
प्रदानशूर २, २८३
प्रभाकर १०६
प्रभास १३५
प्रभूतरत्न १५६, ´६५, २६०, २८४, २६३, ३१५
प्रव्रज्या ३०१
प्रव्रजित १५०, १५४, १६०
प्रस्कन्द ४१
प्रातिहार्य ४, ३००
प्रावरण ७८
प्रियदर्शन १७६, १६७, २८६
प्रेत ६३
बक्कुल १
बन्धकुट्टी १७८
बल २३, २४, २७, ३५, ६३
बलचक्रवर्त्तिन् ३
बली ३
बाहुश्रुत्य १०५
बाष्प १
बीजग्राम ८६
बुद्धपुत्र ३४
बुद्धबोधि ४३
बुद्धभूमि २०४
बुद्धयान ३१, ३२, ६७
बुद्धयानिक १२५
बुद्धक्षेत्र ३
बोध १२६
बोधि २०४
बोधिचर्या २५२
बोधिचित्त ६८

बोधिपाक्षिकधर्म २६६
बोधिमण्ड ११, २७, ४०, ४८, १११, ११२, २२३, २२६, ३१२
बोधिवृक्ष ११६
बोधिसत्त्वभिक्षु ६
बोधिसत्त्वयान ५७, १४८
बोधिसत्त्वयानिक १२५
बोधिसत्त्वयानीय १८७
बोधिसत्त्वरहस्य ५०
बोधिसत्त्वाववाद १५, ५०, १२४, १५६, २६१
बोधिसत्त्वाववादमहानिर्देश २
बोधिप्रस्थित २२
बोध्यङ्ग २३
बौद्ध १०७
ब्रह्मन् ४२, ६३
ब्रह्मकायिक २
ब्रह्मचर्य १०७
ब्रह्मध्वज १२६
ब्रह्मलोक ११४
ब्रह्मविहार १०१
ब्राह्म ११४
ब्राह्मणी २८५
भद्रकल्प १३४
भद्रपाल २
भद्रा १७६
भद्रिक १
भरद्वाज १
भवदृष्टि ५४
भवाग्र १६७, २३२
भार्गव ६८
भिक्षु २१, ६६, २५२
भिक्षुणी २२, २५२
भीष्मकल्प ८७
भीष्मार्जित-स्वरराज २५१
भूतवेताल २६५
भूमिसूचक ७०
भृकुटी १५२, १७८
भेरुण्डक ६३
भैषज्य २१०
भैषज्यराज २, १४८, १७५, २६५, २७१, २८३, ३०६
मकुटदन्ती २६८
मण्ड ४०
मण्डलिन् ३, २३६
मन्त्रधारक १८०
मन्त्रधारणीपद २६६
मन्त्रपद २६६
मन्त्रबलविद्या २६५
मन्दग्लान १६५, १६६
मन्दग्लानता १६३
मञ्जुघोष १६२
मञ्जुश्री २, ४, १७१, १८०, २८३, २८४
मञ्जुस्वर १०
मञ्जूषक ३
मरु २१२
मल्ल १८०, १८३, ३१२
मषि १०६
महल्लक ७३, ७६, ८२, २२८
महाकरुणा १७०
महाकात्यायन १, १०५
महाकाश्यप १, ८१, ८६
महाकौष्ठिल १
महागणिन् १६३
महातेजोगर्भ २६६
महाधर्म २, १२
महाध्यायिन् २२८
महात्मभाव १६७
महानन्द १
महानामन् १
महानिर्देश ३, १५

| | | | |
|---|---|---|---|
| महापूर्ण | ३ | मान्दारव | ३ |
| महाप्रजापती गौतमी | १७५ | मार | ७ |
| महाप्रतिभान | २, १५६, १७५ | मारसेना | १११ |
| महाब्रह्मन् | ११४ | मारकलिचक्र | ३१२ |
| महाभिज्ञा | १३५ | मारकायिक | २८० |
| महाभिज्ञाज्ञानाभिभू | १०६, ११५ | मारपर्षद | १०२ |
| महाभिज्ञापरिकर्म | ५२, २०४ | मारयज्ञ | २८० |
| महाभिषट्क | ११२, १६१ | मारिष | ११६ |
| महामञ्जूषक | ३ | मालाधारी | २६८ |
| महामान्दारव | ३ | मिथ्यादृष्टिकुल | ३०० |
| महामुचिलिन्द | ३६१ | मुक्तकुसुम | १०७ |
| महामुदिता | १७० | मुचिलिन्द | १६१, १६२, १६३ |
| महामैत्री | १७० | मुदिता | १७० |
| महामौद्गलयन | १, १०६ | मुष्टिक | १८२ |
| महारत्न | ५१ | मुसारगल्व | १०५, १०६ |
| महारत्नस्तूप | १५६ | मेघदुन्दुभि | २६८ |
| महारत्नद्वीप | १२८ | मेघदुन्दुभिराज | २८६ |
| महाराजकायिक | ११२ | मेघस्वर | १२६ |
| महारूप | १०६ | मेरु | २४७ |
| महाविक्रामिन् | २ | मैत्रचित्त | ७१ |
| महावैपुल्य | १५, २६१ | मैत्रायनीपुत्र | १३३ |
| महाव्यूह | १०२ | मैत्री | २६६ |
| महायान | १७२ | मैत्रीबल | ११६, १३० |
| महायानिक | ६४ | मैत्रीविहार | १५५ |
| महासम्भवा | २५२ | मैत्रेय | २, ४, १२, २००, २०३, |
| महास्थामप्राप्त | २५१, २५२ | | २१५, २२७, ३११ |
| महासंनिपात | २७१ | मैत्रेयगोत्र | २१ |
| महेश्वर | २, ४२, ८८ | मौद्गल्यगोत्र | १०७ |
| महेशाख्य | १२४ | मौद्गल्यायन | १ |
| महोपेक्षा | १७० | मौष्टिक | १८० |
| महोरग | ३ | मृगरथ | ५५३ |
| मातृग्राम | १३५, १८१, २७१, ६७६, | मृषावाद | ५७, ६१ |
| | २६०, ३०८ | यम | २६५ |
| मातृज्ञा | २८५ | यमक | ३०० |
| मान | ३१२ | यमकप्रातिहार्य | ३०० |

यशस्काम १८, २१
यशोधरा १, १७६
युक्ति ८६
यूप १०५
योगाचार ४
योगिन् ४
रतनचन्द्र २
रत्नकेतुराज १४६
रत्नतेजोभ्युद्गत ३०८
रत्नपाणि २
रत्नपद्मविक्रामिन् ५२
रत्नप्रभ २
रत्नप्रभास १३६
रत्नविशुद्धा १५६
रत्नव्योमक २७१
रत्नमति १४
रत्नसम्भव १०४
रत्नस्तूप १५८, ३१५
रत्नाकर २
रत्नावभास १०४
रतिप्रपूर्ण १०७
रश्मिप्रभास १०२
राक्षसी २६८
राक्षसीद्वीप २८६
राग ५७
राजगृह १
राजमहामात्र २४५
राजमात्य २४५
राजामात्र ७६, ८०
राहुल १, १४३
राहुलभद्र १४५
राहुलमातृ १, १७६
रुद्र २८६
रूपिन् २२८
रेवत १, १३७
लघूत्थानता २८५
लम्बा २८६
लयन १५५
लवणमूल्य ७८
लिखन २५६
लीयन १५३
लेखा ८३
लेन १५६
लोकधातु १६
लोकायत ७२, १५८, १८०, ३११
लोहितमुक्ता २८६
वक्कुल १३७
वङ्कजातीया १७५
वज्रपाणि २६२
वरप्रभ १६
वरप्रभव १७, २०
वर्द्धमानमति २
वरुणदत्त २
वशा १५२
वशिता १
वशीभूत १
वातिक ६५
वाराणसी ४४
वार्षिक २६६
वासुकि २
विकड्ढमान ६२
विकुर्वा २६३
विक्रीडित २०१
विगड़ित ५५, ६१
विगड़ित-प्रासाद ५४
विग्रह ३८, १५६
विचर्चि ३१२
विचर्चिका ७०
विचित्रक ६१
विचिकित्सा २७

विजृम्भित २०१
विज्ञान २२३
विज्ञिन् १९७
विनायक ११७
विनिर्भोग २५१
विपरिणाम-दुःखता ८०
विपरीतसंज्ञी २१३
विपश्यि १३४
विप्रत्यनीक १५३, १८९
विप्रत्यनीयक १२
विभवदृष्टि ५४
विमलगर्भ २९८, २९९
विमलदत्त (राजा) २७३, २९८
विमलदत्ता ३००, ७०२
विमलदत्तसमाधि २८२
विमलनिर्भास २९९
विमलनेत्र २९९
विमलप्रभास २८२
विमलभास २९९
विमलाग्रनेत्र २०
विमान ११९, १२०
विमुक्ति २७
विमोचक २७८
विमोक्ष २३, २७, २५, १०५, ३१२
विरज ५१
विरूढ़क २, २९७
विरूपाक्ष २
विशिष्टचरित्र १९५, २५९, २८३, ३१५
विशुद्धचारित्र १९५
विशेषमति २
विषदूषण २९९
विषपीड़ा २०९
विस्तीर्णवती ३०९
विसन्धि २५०
विहार २११
विहेठक ७९
विहेठा २९९
वीर्य ३७
वीर्यपारमिता २१८
वीर्यरद्धि २०७
वीर्यारम्भ २७२
वृषभित १३३, २०१, २०३, २९१
वेतनक ७८
वेताड़ २९८, ३०९
वेमचित्रिन् ३
वैजयन्त २३८
वैतुल्य १६
वैदेहीपुत्र ३
वैद्यपुरुष २०९
वैनेय २०८
वैपुल्य १८
वैपुल्यसूत्र ३४, ७१
वैयुल्यसूत्रराज १
वैपुल्यसूत्रान्त १०३
वैरोचन २८३
वैरोचनरश्मि २९८
वैशारद्य २३, २४
वैश्वासिक २०
वैश्रवण ३
वैस्तारिकु २०
व्याकरण १०२
व्याड़ ६२
व्याधि ६५
व्यापारण १९१
व्याहर २४४
व्याहार २४
व्यूह ८६
व्यूहराज २८३
व्राणिक ६६
शक्र २

शङ्खशीला ७४
शरीर १६०
शरीरपूजा २२२
शरीरवैस्तारिक ५२, ५३
शरीरस्तूप १६०, १६१
शलाका ६५, १६६
शशिकेतु १०४
शाक्यमुनि १२६, १५८, २००, २१६, २२०, २६०, २८२, २८५, २६३, ३११, ३१४
शाक्यसिंह २१, २२, १०३
शाक्याधिराज २२
शारिपुत्र १, २६, २८
शारीसुत २४, ३५
शालराज २६६
शालेन्द्रराज ३०६
शिखिन् २
शील १६, ३७
शीलपारमिता २६८
शुभव्यूहराज २६८
शून्यता ७३, १५६
शून्यधर्म १२७
शैक्ष १
शैक्षभूमि ५५
शैक्षाशैक्ष १४३, १४६, १७५, १७६, २७७
श्लैष्मिक ६५
शौकरिक १८०, ३११
शौण्डिक ३११
श्रद्धासार २६
श्रामणेर १२४, १८१
श्रावक १६
श्रावकभूमि १२८
श्रावकयान ५६
श्रावकयानिक २६, ५७, ६०, ६६, १५५
श्रावकसंघ १२४
श्रावितक १२१
श्रीगर्भ १७, २०, २१
श्रेष्ठिभार्या २८
श्रेष्ठी २८६
षड्गति ६७
षड्भिज्ञा १०७, १७८
षडायतन १२३
षड़िन्द्रिय २३६
सक्तुप्रस्थमूल्य ८०
सकृदागामिन् २२८
संक्षोभ ४४
सत्कायदृष्टि ७०
सततसमिताभियुक्त २२३, २४४
सत्यवचन २७६
सत्याधिष्ठान २७६
सत्त्वकषाय ३२
सद्धर्मकोश १४५
सद्धर्मक्षय १८८
सद्धर्मपुण्डरीक १७, २५३, २६१, २७१, २८१
सद्धर्मविप्रलोप १८५
सदापरिभुत २५२
सप्ततथागत १३४
सब्रह्मक १७
सभागता ३११
समता ६२
समन्तगन्ध २
समन्तप्रभ १३७
समन्तप्रभास १३७
समन्तभद्र ३०८, ३१०, ३११, ३१२
समन्तमुख २६७
संकारधान ७७, ७८, ७६, ८४
संघ २०४
संघपूजा २२३
सन्धावचन ४६

सन्धाभाष्य २३, २७. ३०, ४७, ५३, १७८, २२०
सन्धाभाषित ६१, १५४, १६३
सन्धि २५०
सम्प्रकाशनता १७७
सम्प्रभणित २७१
सम्प्रमोष २४८
सम्प्रहर्षित ३०३
सम्भवा १०६
समापत्ति २२, २३
संलेखवृत्ति १७७
संलीयना ४४
संश्रावितक १३१
संस्कार १७३
संस्कारदुःखता ८०
संसार ३४
सर्वगुणालङ्कार ३०६
सर्वधर्मशून्यता १५५
सर्वज्ञज्ञान ८६, १३२
सर्वज्ञता ३१
सर्वज्ञताहारक १८६
सर्वज्ञभूमि ८६
सर्वसत्त्वप्रियदर्शन २७१
सर्वरुतकौशल्य २८२
सर्वरूपसंदर्शना २८६
सर्वरूपसंदर्शन-समाधि २८८
सहांपति २
सागरवरधर १४३, १४६
सान्निपातिक ६५
सामुत्कर्षिकी ४७
सांकथ्य ४
सारथि १३
सार्थवाह २६०
सुखसंज्ञा १२२
सुखसंस्पर्श २८५
सुखसंस्पर्शविहार १६६
सुखाकरा ३६६
सुखापना ६८
सुखावती ३६६
सुखविहार १८०
सुखस्थित १८६
सुखुमा २६
सुन्दरनन्द १
सुभूति १, १०४
सुमति १४
सुमेरु ११५
सुवर्णयूप १६
सुविनेय १६५
सुविमुक्त १
सूचीमुख ६२
सूच्यग्र ६६
सूत्र ७२, १६२, २२७
सूत्रान्त ३३, १५०, १५२, २६१
सूत्रान्तधारक २५१, २८०, ३०६
सूत्रान्तलेखक ३०६, ३१२
सूरत ३४
सूर्य २
सेनापति १८६
सौकर १८३
सौकरिक १८०
सौरत्य १५६
सिंह २
सिंहचन्द्रा २५५
सिंहघोष १२६
सिंहध्वज १२६
स्कन्ध ५३
स्कन्धमार १८६
स्तूप ६, १०५, १५४, १५८, २२१
स्त्रीपोषक ३११
स्थविर ७३, ८८

स्थालिकामूल्य ७८
स्पर्शविहारता १६३
स्वागत १३७
स्वयम्भू ३४, ६०, २४७
स्वयम्भुव १५२. २५८
स्वप्रत्यय २३, ६४
स्वभावधर्म ३१६
स्रोत-आपन्न २२७
हड़िनिगड़बन्धन २८६
हञ्चे ८२
हारीती २६८
हिमवन्त् ६६
हीनयान ३४, ३५, १०३
हीनसंज्ञा २८३
हीनाधिमुक्त ८१, १३५
हेतु ३६, ५४, १३०
हेतुकारण २३, ३१
हेष्टा २०२

---

Single issues may be bought separately, but three years after the completion of a work no complete sets are broken for the sale of loose component parts.

Each issue bears, besides its issue number, a fascicle number indicating its place in the work and volume to which it belongs.

**With the issue of this Notice all previous prices and price-lists are cancelled.**

CALCUTTA,
*1st December, 1952.*

The publications or information about them are obtainable from the Asiatic Society, No. 1, Park Street, Calcutta, or from the Society's
Agents: —

MESSRS. LUZAC & CO., 46

M. PAUL GEUTHNER, 13, R

BUCHHANDLUNG OTTO HARR

MESSRS. THACKER, SPINK &

MESSRS. THE MOORE COT
York, U.S.A.

*Residents of Europe sh*

When ordering direct from t
be observed: —

Orders should be addressed
Official by name or title.

All Cheques, Money Orders
"Treasurer, Asiatic Society".

Orders for books should b
address, legibly written, and s
paper containing no other comm

In India, books a

